**५१२. प्रथ प्रख्याने** । प्रख्यानं प्रसिद्धिः । प्रथते । प्रथयति । प्रथा । अत् स्मृदृत्वरप्रथ (७।४।९५) इत्यभ्यासस्यात्वम्—अपप्रथत् । प्रथिम्रदिभ्रस्जां प्रसारणं सलोपश्च (उ० १।२८ श्वेत०) पृथुः । प्रथेः षिवन् प्रसारणञ्च (उ० १।१३६ श्वेत०) पृथिवी । अलीकादौ (द्र० उ० ५ ४।२५) पृथ्वीका[1] । प्रक्तिः[2] । प्रथेरमच् (उ० ५।६८) प्रथमः ॥७५१॥

**५१३. पृथु विस्तारे** । पर्थते । प्रथेः सम्प्रसारणात् (द्र० उ० १।२८) अनार्षमपुं मन्यन्ते ।[3] एवं मृदुनातौ ( द्र० धा० सू० ९।४५ ) सति म्रदिम्[4] (द्र० धा० सू० १।५१५) ॥७५२॥

**५१४. प्रस प्रसवे** । प्रस विस्तारे[5] इति दुर्गः ॥७५३॥

१० **५१५. म्रद मर्दने** । म्रदते । म्रदयति । अमम्रदत् । प्रथिम्रदि (उ० १।२८) इति मृदुः । मृद्वीका । क्र्यादौ मृद क्षोदे (९।४५) मृदुनाति, अमीमृदत् अममर्दत्[6] ॥७५४॥

**५१६. स्खद खदने** । खदनं विदारणम्[7] । स्खदयति ॥७५५॥

**५१७. क्षजि गतिदानयोः** । अस्य पाठोऽनुपधाया अपि चिण्-
१५ णमुलोर्दीर्घार्थः (द्र० ६।४।९३) एतदर्थमेव तत्र ह्रस्वविकल्पे कर्तव्ये दीर्घ-

---

१. 'पृथीका' पाठा० । प्रथधातो-कीकच्प्रत्यये संप्रसारणे वुगागमे च 'पृथ्वीका' सिद्ध्यति, । एवं म्रद मर्दने (१।५१५) सूत्रे मृद्वीका ।

२. द्र० उ० ४।१८ श्वेत, नारा० द्र० उ० १।७५ ।

३. स्मृतमिदं पुरुषकारे (पृष्ठ ७७) धातुवृत्तौ (पृष्ठ १३४) च ।

२० ४. पूर्वहेतुविरुद्धमेतद् वचनम् । यथाहि पूर्वत्र 'प्रथिम्रदिभ्रस्जां संप्रसारणम् (उ० १।२८) इति वचनात् पृथेरनार्षत्वं प्रतिपाद्यते, तथैव म्रदेरपि संप्रसारणविधानात् मृदनातेरनार्षत्वं वक्तव्यम्, न तु मृदनातिं स्वीकृत्य म्रदेः ।

५. 'प्रस विस्तारे' इति काशकृत्स्नधातुपाठः (पृष्ठ १३५) ।

६. 'अत्स्मृदृत्वरप्रथम्रद' (७।४.९५) इति शपानिर्देशात् मृदनातेर्णिचि
२५ चङि अत् न भवति । तेन 'उर्ऋत्' (७।४।७) इत्येव प्रवर्तते ।

७. 'स्खदनं विद्रावणमिति स्वामी' इति धातुवृत्तावुद्धृतः पाठः (पृष्ठ १३४) ।

विधिः। एवं दक्षिकन्दिक्रन्दिक्लन्दीनां (१।५१८, ५२०) ज्ञेयम्। वजेति कौशिकः। चुरादौ वजि कृच्छ्रजीवने (१०।७५) क्षञ्जयति ॥७५६॥

५१८. दक्ष गतिहिंसनयोः। दक्षते। दक्ष वृद्धौ शीघ्रार्थे च (१।४०१) इत्यस्यैवार्थभेदाद् घटादिकार्यार्थं पुनः पाठः ॥७५७॥

५१९. क्रप कृपायाम्। क्रपते। क्रपयति। क्रपेः प्रसारणाच्च (तु० ३।३।१०४ ग० सू०) इति कृपा। उणादौ कृपणः ॥७५८॥ 5

५२०. कदि क्रदि क्लदि वैक्लव्ये। विक्लवः कातरः। वैकल्य[1] इति चन्द्रः[2] (१।५२०)। क्रन्दते, क्रन्दा। कद, क्रद, क्लद इति नन्दी[3]—क्रदा। कदि क्रदि क्लदि आह्वाने रोदने च (१।५८) इति परस्मैपदिनः—क्रन्दति ॥७५९-७६१॥ 10

५२१. ञित्वरा सम्भ्रमे। सम्भ्रमोऽत्राशुकारिता। त्वरते। त्वरयति। त्वरा। अतत्वरत्। त्वरित्वा। क्विपि—तूः। ञीतः क्तः (३।२।१८७) निष्ठायां रुष्यमत्वरसंघुषास्वनाम् (७।२।२८) इति वेट्—तूर्णः, त्वरितः। इत्थं चादित्त्वं प्रपञ्चार्थम्[4]। तूर्तिः। वहिश्रियुश्रुग्लाहात्वरिभ्यो नित् (दश० उ० १।२१) तूर्णिः ॥७६२॥ 15

५२२. घटादयः षितः। दर्शितं षित्त्वफलम्। अत्र पूर्वा दश पठिताः, दक्षकन्द्यादयस्तु चत्वारः स्थानान्तरपठिताः कार्यार्थमनूदिता इत्येके ॥

५२३. उदात्ता अनुदात्तेतः ॥ 20

५२४. ज्वर रोगे। इतः फणान्ताः (१।५६१) षट्त्रिंशत् सेटः परस्मैपदिनश्च। ज्वरति। ज्वरयति। अज्वारि, अज्वरि। ज्वारं

---

१. चान्द्रधातुपाठे (१।५२०) 'वैक्लव्ये' इति मुद्रितः पाठः। स चापपाठः प्रतीयते। २. उद्धृतं पुरुषकारे (पृष्ठ ८१) धातुवृत्तौ (पृष्ठ १३५ भ्रष्टः पाठः) च। ३. उद्धृतं पुरुषकारे (पृष्ठ ८१)। 25

४. आदितश्च (७।२।१६) इति सूत्रं निष्ठायां नित्यमिण्निषेधार्थम्, इह तु रुष्यमत्वर (७।२।२८) इत्यनेन प्रत्ययमिटो विकल्प उच्यते। तथा सति आदित्करणमनर्थकमेव, नचान्यत् किंचिदादितः फलम् इति भावः।

ज्वारम्, ज्वरं ज्वरम् । ज्वरितः । जूः । जूर्तिः । वीज्याज्वरिभ्यो निः। (उ० ४।४८) जूर्णिः। अज्वरेरिति निषेधात् रुजार्थानाम् (२।३।५४) इति षष्ठी नास्ति—चोरं ज्वरयति ज्वरः ॥७६३॥

५२५. गड सेचने । गडति । गडयति । गड्डुः । गडोऽचि । सुखं स्वपिति गौर्गडी[1] । गडेरादेश्च कः (उ० ३।१०६) कडत्रम् । गडेः कड च (दश० उ० ७।२२) इति कडारः पिङ्गः (?, पिङ्गलः) ॥७६४॥

५२६. हेड वेष्टने । हेडति । हिडयति । पाठसामर्थ्याद्[2] ह्रस्वः—अहिडि अहेडि, हेडं हेडम्, हिडं हिडम् । अन्ये ह्रस्वं कृत्वा चिण्णमुलोर्वा दीर्घमाहुः—अहीडि अहिडि; हीडं हीडम्, हिडं हिडम् ॥७६५॥

५२७. वट भट परिभाषणे । वटयति, भटयति । वट वेष्टने, भट भृतौ (१।२०३,२०६) इत्याभ्यां वाटयति भाटयति ॥७६६,७६७॥

५२८. नट नतौ[3] । नटति । नटयति शाखाम् । नृत्तौ तु (द्र० १।२०९) नाटयति[4] । चुरादौ नट अवस्यन्दने (१०।१२) अस्माच् चौरस्योन्नाटयति ॥७६८॥

५२९. चक तृप्तौ प्रतिघाते च[5] । चकति[6] । चकयति । चकितः । कठिचकिभ्यामोरः (दश उ० ८।२६) चकोरः । चक तृप्तौ (१।७४) इत्यस्य चकते ॥७६९॥

५३०. ष्टक स्तक प्रतिघाते । स्तकति । तिष्टकयिषति, तिस्तकयिषति ॥७७०,७७१॥

---

१. अनुपलब्धमूलम् ।

२. अयं भावः—णिज्निमित्तं यत्र गुणवृद्धिभ्यां दीर्घत्वं भवति तत्रैव 'मितां ह्रस्वः, चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (६।४।९२,९३) इति सूत्रे प्रवर्तेते । इह तु स्वभावसिद्ध एकारः, न तु णिज्निमित्तः । अत आह—दीर्घपाठसामर्थ्याद् इति भावः ।

३. 'गतौ' पाठा० ।

४. स्मृतमिदं पुरुषकारे (पृष्ठ ६७) धातुवृत्तौ (पृष्ठ १३६) च ।

५. स्मृतमिदं पुरुषकारे (पृष्ठ ४३) धातुवृत्तौ (पृष्ठ १३६) च । 'तृप्तौ' इत्येव काश० धातु० (पृष्ठ १३८) ।

६. द्र० पुरुषकारः (पृष्ठ ४३) ।

६३१. कखे हसने । कखति । कखयति । एदित्त्वाद्—अकखीत् । उणादौ किखिर्लोमशः[1] ॥७७२॥

६३२. रगे शङ्कायाम् । रगति । अरगीत् । रगडस्तालः ॥७७३॥

६३३. लगे सङ्गे । लगति । लगयति । अलगीत् । क्षुब्धस्वान्तध्वान्तलग्न (७।२।१८) इति सक्ते लग्नः साधुः, लगितोऽन्यः ॥७७४॥ ५

६३४. ह्गे ह्लगे षगे स्थगे संवरणे । संवरणमाच्छादनम् । स्थगति । स्थगयति । तिष्ठगयिषति, तिस्थगयिषति च । षगे स्थगे इति दुर्गः ॥७७५-७७८॥

६३५. कगे नोच्यते । अस्यायमर्थ इति नोच्यतेऽनेकार्थत्वात् । नोच्यत इति योऽर्थस्तत्रार्थे कगिरित्येके[2] ॥७७९॥ १०

६३६. अक अग कुटिलायां गतौ । अकति । अगति । पृषोदरादौ न अनस ओकं[3] गतिं हन्तीत्यनोकहो[4] वृक्षः । अगति । अग्रम् ॥ ७८०, ७८१॥

६३७. कण रण गतौ । अनयोर्गत्यर्थयोर्मित्त्वम् । शब्दे तु- काणयति ॥७८२,७८३॥ १५

६३८. चण श्रण दाने । चणति । चणयति । चणकः । गतिहिंसार्थाच्च चाणयति । श्रणति । श्रणयति । चुरादौ (१०।३८) । विश्राणयति । भज विश्राणने (१०।१७९) विश्राणनादन्यपयस्विनीनाम् (तु॰ रघु॰ २।५४) । शण इत्यपि दुर्गः—शणः शाणः ॥७८४,७८५॥

६३९. श्रथ क्नथ क्लथ हिंसार्थाः । क्रथति । क्रथयति । २०

---

१. पञ्चपाद्यां दशपाद्यां च 'किखि'पदं न व्युत्पाद्यते । भोजीयोणादौ 'किखिर्लोमशी' (स॰ क॰ २।१।१६६) हैमोणादौ 'किखिर्लोमासका' (सू॰ ६२६) इत्युक्तम् । हरदत्तस्तु 'अपचितपरिमाणः शृगालः किखी' इत्युक्तवान् ( पदमञ्जरी २।१।६) । २. काशकृत्स्नीये धातुपाठे 'कगे गतौ' पठ्यते (पृष्ठ १३९) ।

३. 'आकम्' पाठा॰ । लिबिशेन 'ओकं' इति शुद्धः पाठान्तरे न्यस्तः । २५

४. द्र॰ भोजीयम् 'अनेरोकहः' (स॰ क॰ २।३।१८६) सूत्रम्, हैमोणादिसूत्रं (५९५) च । ५. 'श्रथ' इत्यधिकं क्वचित् ।

चुरादौ (१०।२१८) चौरस्योत्क्राथयति । घञन्ताण्णिजिति चन्द्रदुर्गौ,[1] नाटक्राथपिषाम् (२।३।५६) इति लिङ्गाच्च ॥७८६-७८८॥

५४०. चनु च । चकाराद् हिंसार्थः । चनति । चनयति ॥७८९॥

५४१. वनु च नोच्यते[2] । तथा अनुकर्षणार्थश्चकारः । यद्वा न केवलं कगे, यावद् वनु च नोच्यते क्रियासामान्यवाचित्वात्[2] । वनति । वनयति । वत्वा, वनित्वा । वतः । संवननम् । वन षण भक्तौ (१।३११) इत्यस्य वानयति ॥७९०॥

५४२. ज्वल दीप्तौ । ज्वलति । ज्वलयति । अग्रे (द्र० १।५६८) ज्वलादिकार्यार्थः पाठः ॥७९१॥

५४३. ह्वल ह्मल चलने । ह्वलति । ह्वलयति । विह्वलः ॥७९२,७९३॥

५४४. स्मृ आध्याने । आध्यानमुत्कण्ठा । स्मरति । स्मरयति । चिन्तायां (द्र० १।६६०) स्मारयति, विस्मारयति । अन्यत्रोक्तानामर्थविशेषे मित्त्वार्थं इह पाठः ॥७९४॥

५४५. दॄ भये । दरति । दरः । दरद् रोमकदेशः[3] । बालं दरयति । क्र्यादौ दॄ विदारणे (९।२१)—दृणाति, दारयति काष्ठम् । तस्यैव मित्त्वार्थं इह पाठ इत्येके[4] । दिवादौ दीर्यतीति पञ्जिका । कर्मकर्तरि दीर्यत इत्येके ॥७९५॥

---

१. चन्द्रगोमी धातुपाठे चुरादौ 'क्रथ हिंसायाम्' इत्येतं धातुं न पठति । तदभावे च 'षष्ठी सम्बन्धे' (चान्द्र व्याक० २।१।९५) इति सूत्रव्याख्याने 'चौरस्योत्क्राथयति, चौरमुत्क्राथयति' इति प्रयोगसिद्धये 'घटादित्वात् क्रथयतीति प्राप्नोति । क्रथनं क्राथः, क्राथं करोति क्राथयति' इत्येवं व्याख्यातवान् । उत्तरोत्तरं धातुपाठेषु धातूनां संक्षेपात् पूर्वव्याकरणानुसारं धातुनिष्पन्नानपि शब्दान् उत्तरे वैयाकरणाः कथं नामधातोर्व्युत्पादयन्ति इत्येतदत्र स्पष्टम् । वस्तुतस्तु भगवता पाणिनिना नामधातोर्णिङादिताः प्रयोगा अपि धातुजा एव । एतदेव संचिन्त्य महाभाष्यकारेण नामधातुप्रकरणेऽसकृदुक्तम्—"धातव एवैते'' ''न चेव ह्यर्था आ दृश्यन्ते, क्रियावचनता च गम्यते" (३।१।८, ११, १९) ।

२. 'चनु वनु स्मरणे' इति काशकृत्स्नः (पृष्ठ १४०) ।

३. 'दर्दिस्तान' नाम्ना संप्रति प्रसिद्धः । ४. स्मृतमिदं धातुवृत्तौ (पृष्ठ १३८) ।

५४६. नॄ नये । क्र्यादेर् ( ९।२३ ) मित्त्वार्थं विरलोऽस्य पाठः । नृणन्तं प्रयुङ्क्ते नरयति ॥७९६॥

५४७. श्रा पाके । अदादेः (२।४५) श्रै पाके (१।६४८) इत्यस्य वेह मित्त्वार्थः पाठः[1] । श्राति श्रायति वा कश्चित् तं प्रयुङ्क्ते श्रपयति चरुं चैत्रेण; अन्यत्र श्रापयति धर्मः, खेदयतीत्यर्थः ॥७९७॥ ५

५४८. मारणतोषणनिशानेषु ज्ञा[2] । निशानमुत्तेजनम् । निशामन इत्येके पेठुः। ज्ञा अवबोधन (९।३७) इत्ययं क्र्यादिर्मारणादौ मित्—संज्ञपयति पशुम्, विष्णुं विज्ञपयाम्यहम्, प्रज्ञपयति शास्त्रम्[3] । अन्यत्र—राजानं विज्ञापयति, अवबोधने ज्ञापयति, प्राप्तिं प्रज्ञापयतीति ज्ञानार्थे । तोषणे—एवमाज्ञप्तोऽस्मि सामाजिकैः[4] । कथम् अध्वंसामात्रो १० ज्ञीप्स्यते,[5] प्रश्च ज्ञीप्सायाम् ( ६।११४ ) इति ज्ञापकाद् ह्रस्वोऽत्र आप्ज्ञप्यृधामीत् ( ७।४।५५ ) इति कृतह्रस्वस्येत्त्वात्, चुरादौ ज्ञपिर् (१०।७७) अण्यहेतुमणिणजर्थः ज्ञीप्सत्यर्थे । इत्येके । चुरादौ ज्ञा नियोजने (१०।१७८) अस्मात्—आज्ञापय ज्ञातविशेषपुंसाम्[5] इति ।

५४९. कम्पने चलिः । ज्वलादौ (१।५६९)पठितस्यापि अस्येह १५ मित्त्वार्थः पाठः । इकार उच्चारणार्थः[6] । प्रचलयति लताम् । अन्यत्र—चालयति शीलम्, हरतीत्यर्थः[7] ॥

५५०. छदिर् ऊर्जने छद संवरणे (१०।३७) इत्ययं चुरादि-

---

१. स्मृतमिदम् पुरुषकारे (पृष्ठ २१) ।

२. 'ज्ञः' पाठा० । एतद्विषये पुरुषकारो ऽत्र द्रष्टव्यः (पृष्ठ १८) । २०

३. 'प्रज्ञपयति शरम्' इत्युदाहरणं धातुवृत्तौ (पृष्ठ १३९) प्रदर्शितम् ।

४. अनुपलब्धमूलमिदम् । कस्यचिन्नाटकस्य सूत्रधारवाक्यमेतत् स्यात् । तुलनीयम्—'आज्ञापितोऽस्मि परिषदा' इति मुद्राराक्षसे, अभिहितोऽस्मि विद्वत्परिषदा' इति मालविकाग्निमित्रे । ५. अनुपलब्धमूलमिदं वाक्यम् ।

६. 'इक्श्तिपौ धातुनिर्देशे' ( ३।२।१०८ वा० ) इति वचनाद् धातुनिर्देशार्थ इक्प्रत्ययः, नोच्चारणार्थं इकारः । २५

७. उदधृतमिदं सिद्धान्तकौमुद्याम् (भाग ३, पृष्ठ १८७) । धातुवृत्तौ तु 'शीलं चालयति अन्यथा करोतीत्यर्थ इति स्वामी' इत्येवमुद्धृतम् (पृष्ठ १३९) ।

रूर्जने[1] प्राणने मित् छदयत्यग्निः, स्वार्थे णिच्, छादयन्तं प्रयुङ्क्त इति हेतौ वा। अन्यत्र—छादयति गृहम्।

५५१. जिह्वोन्मन्थनयो[2]र्लडिः। लड विलासे (१।२५०) इत्ययं भ्वादिर्जिह्वाविषयायां क्रियायामुन्मथने[3] च मित्। लडयति जिह्वाम्, [4]लळयति दधि। अन्यत्र-लाडयति चित्रम्,[5] लालयति बालम्। लालितः लालितकः लालिका लाला। जिह्वोन्मथन इति गुप्तः जिह्वाशतान्युल्ललयत्यभीक्ष्णम्[6]। चुरादौ लड उपसेवायाम् (१०।७)—लाडयति॥

५५२. मदी हर्षग्लेपनयोः। मदी हर्षे (४।१०२) इत्ययं दिवादिरत्रार्थे मित्। मदयति सुरा चैत्रम्, विमदयति शत्रुम्। अन्यत्रानेकार्थत्वादुन्मादयति पुरुषम्, प्रमादयति[6]॥

दलि-वलि-स्खलि-रणि-ध्वनि-त्रपि-त्रपयश्च इति श्रीभोजसूत्रम्[7] (सर० कण्ठा० १।१।१९२) दलयति दध्वान ध्वनयन्नाशाः[8]॥

५५३. घटादयो मितः। उदाहृतमेतत्॥

५५४. जनी-जॄष्-क्नसु-रञ्जोऽमन्ताश्च। जनी प्रादुर्भावे (४।४१) जॄष् वयोहानौ (४।२०) क्नसु ह्वरणदीप्त्योः (४।५) रञ्ज रागे (१।७२०) इत्येतेऽमन्ताश्च मित्संज्ञाः। जनयति। जन जनने (३।२४) इति जुहोत्यादिरपि गृह्यते, अन्यथार्थरूपयोरभेदात् विकल्पेनामित्त्वं ब्रूयात्। वैदिको वाऽसौ जनयति। जॄष् वयोहानौ (४।२०) दिवादिः—जरयति। जृणातेः (९।२) तु जारयति पतिम्, जारयत्यभ्रकम्। रञ्जेर्णौ मृगरमणे नलोपः

१. स्मृतमिदं धातुवृत्तौ (पृष्ठ १३९)।

२. ०न्मथनयो० पाठः पुरुषकार उद्धृतः (पृष्ठ ७२)।

३. ०मुन्माथे० पाठः पुरुषकार उद्धृतः (पृष्ठ ७२)।

४. डलयोरेकत्व स्मरणात्।

५. "जिह्वोन्म……लाडयति मित्रम्" उद्धृतमिदं पुरुषकारे (पृष्ठ ७२) अत्र पुरुषकारोद्धृतः 'मित्रम्' पाठ एव युक्तः।

६. उद्धृतमिदं पुरुषकारे (पृष्ठ ७२)। मूलं मृग्यम्।

७. 'श्रीभोजोऽसूत्रयत्' पाठा०।

८. मूलं मृग्यम्।

(६।४।२४ वा०)—रजयति मृगान् । रमयति, भ्रमयति, संक्रमयति, विश्रमयति ॥

५५५. ज्वल-ह्वल-ह्मल-चल[1]-नमामनुपसर्गाद्वा । एषां नित्यं मित्त्वं प्राप्तम्; अनुपसर्गाणां विकल्प्यते । ज्वालयति, ज्वलयति । ह्वालयति, ह्वलयति । ह्मालयति, ह्मलयति । चालयति, चलयति । नामयति, नमयति । सोपसर्गाणां तु नित्यम्—प्रज्वलयति, विह्वलयति, प्रह्मलयति, प्रचलयति, प्रणमयति[2] ॥ 5

५५६. ग्ला-स्ना-वनु-वमाञ्च[3] । आद्ययोरप्राप्तौ विकल्पः, अन्त्ययोः प्राप्तौ । एषामनुपसर्गात् मित्त्वं वा । ग्लपयति, ग्लापयति । स्नपयति, स्नापयति । वनयति, वानयति । वमयति, वामयति । 10 अनुपसर्गादित्येव-प्रग्लापयति, प्रस्नापयति, उपवनयति, उद्वमयति ॥

५५७. न कम्यमिचमाम् । एषाममन्तत्वात् प्राप्ता मित्संज्ञा निषिध्यते । कामयते । आमयति । आचामयति[3] ॥

५५८. शमोऽदर्शने । शमु उपशमे (४।९५) इत्यस्य दर्शनादन्यत्रार्थे[4] मित्संज्ञा । अमन्तत्वात् सिद्धौ[5] नियमार्थं वचः । शमयति 15 रोगम्, निशमयति श्लोकम् । दर्शने तु—निशामयति रूपम् । निःशर्करमिदं तीर्थं भरद्वाज निशामय[6] पश्येत्यर्थः ॥

५५९. यमोऽपरिवेषणे । यम उपरमे (१।७०५) इत्यस्य परिवेषणा-

---

१ स्मृतं प्रक्रियाकौमुद्याम् (भाग २, पृष्ठ ३२४)।

२. 'विनमयति' पाठा० ।

३. काशकृत्स्नधातुपाठे 'ग्लास्नावनुवमश्वनकम्यमिचमः' इत्येवं सूत्रपाठः । तत्र 'श्वन' इति स्वतन्त्रो धातुः । कम अम चम एषामपि विकल्पेन मित्संज्ञा विधीयते । व्याख्यातं चैतत् टीकाकारेण—कमयति कामयति, अमयति आमयति, चमयति चामयति (पृष्ठ १४३)।

४. स्मृतमिदं पुरुषकारे (पृष्ठ १०१) धातुवृत्तौ (पृष्ठ १४०) च । दूषितं च 25 सि० कौ० (भाग ३, पृष्ठ १९३)। ५. 'प्राप्तौ' पाठा० ।

६. रामायण पश्चिमोत्तर शाखा (लाहौर संस्क०) बालकाण्ड २।५॥ तत्र 'भारद्वाज' इत्यपि पाठान्तरम् ।

दन्यत्रैवार्थे मित् संज्ञा ।[१] यमयति, नियमयति । परिवेषणे तु यामयति श्राद्धेऽन्नम्[२], आयामयति चन्द्रम्[३] । अत्रैव स्वनोऽवतंसन इति दुर्गः—स्वनयति वस्त्रम् ॥

५६०. स्खदिर् अपपरिभ्याञ्च[४] । आभ्यामेवोपसर्गाभ्यां

५ स्खदिः मित्[५] । अपस्खदयति परिस्खदयति । अवेति—श्रीभोजः अवस्खदयति । अन्योपसर्गपूर्वान्नास्ति—प्रस्खादयति ।

५६१. फण गतौ । फणति, फणयति । फणाञ्च सप्तानाम् (६।४।१२५) इत्येत्वाभ्यासलोपौ[६] वा—पफणुः, फेणुः। गतेरन्यत्र—फाणयति, घटं निःस्नेहयतीत्यर्थः[७] । क्षुब्ध-स्वान्त-ध्वान्त (७।२।१८) इत्यनायासे फाण्टं

१० साधु । फणेः पूर्वे[८] घटादय इत्येके[९] ॥७९८॥

५६२. उदात्ता उदात्तेतः ॥

[सेड् उभयपदी]

५६३. राजृ दीप्तौ, उदात्तः स्वरितेत् । राजते, राजति,

---

१. द्र० 'तत्र च क्षीरस्वाम्यादिपक्षे······इत्यादि पुरुषकारे (पृष्ठ १०१)।

१५ दूषितं च स्वामिमतं धातुवृत्तौ (पृष्ठ १४१), सिद्धान्तकौमुद्यां (भाग ३ पृष्ठ १९४) च । काशकृत्स्नधातुपाठस्य कन्नडटीकायामन्यथा व्याख्यायते (पृष्ठ १४४) ।

२. 'अन्नं' क्वचिन्न ।

३. 'यमोऽपरि······चन्द्रम्' इत्येतावदुद्धृतं पुरुषकारे (पृ० १००) ।

४. 'स्खदिर् अवत्यां च' इत्येवं काशकृत्स्नधातुपाठसूत्रम् । 'अवत्यां रक्षायां,

२० चात् परिवेषणे च मित्' इत्येवं तट्टीकायां व्याख्यातम् (द्र० पृष्ठ १४४) ।

५. इयं व्याख्या धातुवृत्तौ (पृष्ठ १४१) दूषिता ।

६. 'वक्तव्यौ' इत्यधिकः क्वचित् ।

७. 'अन्यत्र फाणयति, सक्तून् स्नेहयतीत्यर्थः इति स्वामिसम्मताकारौ' इति सायणः (धा० वृ० पृष्ठ १४१)। क्षीरतरङ्गिण्यां नैतादृशः पाठ

२५ उपलभ्यते । ८. 'पूर्वं' पाठा० ।

९. काशकृत्स्नधातुपाठे 'फण गतौ' इत्यनन्तरम् 'वृन् घटादयो मानुबन्धा एकत्वे' इति सूत्रं पठ्यते । तत्र 'एकत्वे' इत्यस्यार्थो न परिज्ञायते । कन्नडटीकायांमपि सम्यङ् न व्याख्यायते । 'एकत्वे' इत्यस्य कदाचिद् 'एकस्मिण्णौ' इत्यभिप्रायः स्यात् । तथा सति द्वितीये णिचि किं 'घाटयति' इति रूपमिष्टम् ?

राजिता । रराजुः रेजुः । आनकः शीङ्भियः (उ० ३।८२) इति पृथङ्-निर्देशाद्[1] राजानकः[2] । कनिन् (उ० १।१५६) राजा । राजेरन्यः (उ० ३।१००)—राजन्यः ॥७९९॥

## [सेट आत्मनेपदिनः]

८६४. भ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ, उदात्ता अनुदात्तेतः । ५
भ्राजते, बभ्राजे, भ्रेजे । टुरुभयस्येत्येके[3] । ट्वितोऽथुच् ( ३।३।८६ ) भ्राजथुः । भ्राजिभ्राश्योर्ऋदित्त्वं नेच्छन्ति[4] पक्षे ह्रस्वस्येष्टत्वम्—अबभ्राजत् अबिभ्रजत् । नप्तृनेष्टृ (उ० २।९५) इति-भ्राता (?) । वा भ्राशभ्लाश (३।१।७०) इति श्यन्—भ्राशते भ्राश्यते, भ्लाशते भ्लाश्यते । भ्राशथुः, भ्लाशथुः ॥ ८०१-८०२॥ १०

## [सेटः परस्मैपदिनः]

५६५. स्यमु स्वन स्तन ध्वन शब्दे । इतः क्षलान्ता (१।५८८) अष्टाविंशतिः सेटः परस्मैपदिनश्च । स्यमति । स्येमुः सस्यमुः । उणादौ (द्र० ३।४६) स्यमीका क्रिमिः । स्वनति । स्वेनुः सस्वनुः । वेश्च स्वनो भोजने (८।३।६९) षत्वम्—विष्वणति, अवष्वणति । स्वनयति । १५
स्वनान्तः फणादिः । स्तनति, स्तनयति । ध्वनति, ध्वनयति । ष्टन इति चन्द्रः[5]—तिष्टनयिषति ॥८०३-८०६॥

५६६. षम ष्टम अवैक्लव्ये । समति । समः ! विषमः । समयति । स्तमति, स्तमयति ॥८०७, ८०८॥

---

१. प्रत्ययाः पृथगेव निर्दिश्यन्तेऽतोऽगतिकोऽयं निर्देशः । कदाचिदत्र 'प्राङ्निर्देशाद्' इति युक्तः पाठः स्यात् । तुलना कार्या—'प्राक्प्रत्ययनिर्देशात्……' दश० उणा० वृत्ति पृष्ठ २४०, ४२४ । २०

२. एतन्नामका बहवो विद्वांसा कश्मीरेष्वभवन् ।

३. काशकृत्स्नचन्द्रधातुपाठयोराद्ये धातौ 'टु' नैव पठ्यते । न्यासकारमैत्रेयसायणादयः पठन्ति । २५

४. क इति न प्रतिपादितम् । ह्रस्वविकल्पविधायके सूत्रे भ्राशेः पाठादर्शनादिष्टिरेवैषा विज्ञेया ।

५. मुद्रिते चान्द्रधातुपाठे (१।५५९) 'स्यमु स्वन ध्वन शब्दे' इत्येव पाठ उपलभ्यते । क्षीरस्वामिवचनादत्र स्वनः परः 'ष्टन' धातुः प्रणष्ट इति प्रतीयते ।

५६७. वृत् । घटादय एतदन्ता इति सभ्याः[1] ॥

५६८. ज्वल दीप्तौ । ज्वलति । ज्वलिता । ज्वलितिकसन्तेभ्यो णः (द्र० ३।१।१४०) वा–ज्वालः, ज्वाला, ज्वलः ॥८०९॥

५६९. चल कम्पने । चलति । चलितः । चलनः । चालः, ५ चलः । चरचलवद (तु० ६।१।१२ वा०) इति चलाचलः । यङ्लुक्यपि विकल्पः[2]—चाचलः चञ्चलः[3] । चलिः कम्पने[4] (१।५४६) णौ मित्—चलयति । चुरादौ चल भृतौ (१०।६३) चालयति ॥८१०॥

५७०. जल घात्ये[5] । घात्यं जडत्वम्, अतैक्ष्ण्यमित्यर्थः[6] । जलति । जालम्, जलम् । व्यवस्थितविकल्पत्वाद् भिन्नेऽर्थे प्रत्ययौ । १० चुरादौ जल अपवारणे (१।२०) जालयति । लडयोरेकत्वाज् जडः ॥८११॥

५७१. टल ट्वल वैप्लव्ये[7] । विप्लव एव वैप्लव्यम् । टलति॥

५७२. स्थल स्थाने । ष्ठल इति चन्द्रः[8] (३।५६५) स्थलति । स्थालम् । स्थाली । स्थलम् । स्थली ॥८१४॥

५७३. हल विलेखने । विलेखनं कर्षणम् । हलति । हाला १५ सुरा । हालम्, हलम् । इन् (दश० उ० १।४६) हलिः, हडिः ॥८१५॥

५७४. णल गन्धे । गन्धोऽर्दनम् । प्रणलति । नालम् । नाला पद्मादीनां वृन्तम् । नाली, नाडी । प्रणालः, प्रणाली, प्रणाडिका । नलः, नडः ॥८१६॥

---

१. स्मृतं धातुवृत्तौ (पृष्ठ १४३) ।

२० २. अभ्यासस्य आगागमस्य इति शेषः ।

३. आगागमाभाव 'नुक्' केन भवति इति न स्पष्टीकृतं क्षीरस्वामिना । स्वीयामरव्याख्यानेऽपि 'चञ्चला' पदं न साधु व्याकृतम् ।

४. अर्थतो अनुवादः ।

५. जल धान्ये इति काशकृत्स्नीये (पृष्ठ १०६) चान्द्रे (१।५६३) च । २५ पाठः । आर्द्रीकरणं च तदर्थः इति कन्नडटीकातोऽवगम्यते ।

६. 'घातनं तैक्ष्ण्यम्' इति क्षीरस्वामी इति धातुवृत्तौ (पृष्ठ १४४) पाठः ।

७. मैत्रेयसायणादयः 'वैक्लव्ये' इत्याहुः । तथैव काशकृत्स्नचन्द्रावपि ।

८. काशकृत्स्नधातुपाठेऽपि 'ष्ठल' इत्येव पठ्यते (पृष्ठ १४६) ।

५७५ पल गतौ । पालः । पलं मांसम् । पललं तिलकल्कः । गाः पालयति—गोपालः । चुरादौ पल रक्षणे (१०।६४)—पालयति ॥८१७॥

५७६. बल प्राणने । प्राणनं जीवनम् । बलति । बालः, बाला अजादौ (३।१।१३४)। बलः, बलम् । चुरादौ (१०।८०) मित्—बलयति ।

५७७. धान्यावरोधने च । धान्यमवरुध्यते यत्रेति कुसूलेऽर्थे—बलटः । वल संवरणे[1] (१।३२९) त्वात्मनेपदी—वलते ॥८१८॥ ५

५७८. पुल महत्त्वे । पोलति । पोलः । विपुलम् । पुलः । पुलोऽस्यास्तीति[2] [ पुली[3] । तलिपुलिभ्यां च (उ० २।५३) ] पुलिनम् । कुषिपुलोः किन्दच् (तु० उ० २।८५) पुलिन्दः । पिनाकादौ (द्र० उ० ४।१५) पुलाकस्तुच्छधान्यम् । इक्[4] पुलिः । पुलकः । तुदादौ[5] पुलति । चुरादौ (१०।५७) पोलयति ॥८१९॥ १०

५७९. कुल संस्त्याने बन्धुषु च । संस्त्यानं संघातः । कोलं बदरम् । कक्कोलः, कङ्कोलम् । कुलम् । नकुलः । तमिविडि (दश० उ० ८।११२) इति कालन्—कुलालः ॥८२०॥

५८०. शल[6] हुल पत्लृ गतौ । शलति । शाला । शलः । शललं श्वाविल्लोम । शल्यकः । शल्यम् । शल्मलिः । शलभः । शल्कः । शलोका । शालूकम् उत्पलादिकन्दः । शल चलनसंवरणयोः १५

१. 'वल संवरणे दन्त्यौष्ठ्यादिः । तस्यात्र ओष्ठ्यादौ निर्देशो भ्रान्त्या बोध्यः ।

२. इतोऽग्रे कश्चित् पाठस्त्रुटितः प्रतिभाति । नहि 'पुलोऽस्यास्तीत्यर्थे' 'पुलिनम्' संभवति 'पुली' इति प्राप्नोति । अस्माभिः त्रुटितपाठपूरणाय प्रयतितम् । २०

३. केचन बलादौ (५।२।१३६) पुलशब्दं पठन्ति । द्र० गणरत्न० २६३ ।

४. पूर्वसम्पादकेन लिबिशेन अत्रोणादिः ( ४।१४२ ) संख्या तुलनाय निर्दिष्टा । न चोणादौ 'इक्' प्रत्ययः श्रूयते । अयं तु 'इक् कृष्यादिभ्यः' इति वार्तिके (३।३।१०८) पठ्यते । वार्तिकमिदमबुद्ध्वा लिबिशोऽसत्कल्पनां कृतवान् ।

५. मतमिदं पुरुषकारे (पृष्ठ १०४) उद्धृतम् । परन्तु क्षीरतरङ्गिण्यां नायं तुदादावुपलभ्यतते । 'पुर अग्रगमने' इति तु सर्वैस्तुदादिषु पठ्यते । २५

६. 'शल श्वल आशुगमने इति ज्वलादौ क्षीरस्वामी' इति पुरुषकारे (पृ० १०४) उद्भ्रियते । अत्र न तथा पाठ उपलभ्यते ।

(१।३२८) इत्यस्यैव ज्वलादिकार्यार्थः पाठः । होलति । पतति । लृदित्वात् लुङि अङ्, पतः पुम् (७।४।१९) अपप्तत् । उत्पातः । निपातः । पातो राहुः । पतः । नेर्गदनद (८।४।१७) इति णत्वम्—प्रणिपतति । सनीवन्तर्धभ्रस्ज (७।२।४९) इति वेट् सनि मीमाघु (७।४।५४) इतीस्-
५ अभ्यासलोपौ (द्र० ७।४।५८)—पित्सति, पिपतिषति । पतितः—यस्य विभाषा (७।८।१५) इतीण्निषेधो नास्ति द्वितीयाश्रितातीतपतित (२।१।२४) इति लिङ्गात् । अलङ्कृञ् (३।२।१३६) इतीष्णुच्—उत्पतिष्णुः । जुचङ्क्रम्य (३।२।१५०) इति युच् —पतनः । लषपतपद (३।२।१५४) इत्युकञ् प्रपातुकः । विशिपतिपदिस्कन्दाम् (३।४।५६) इति णमुल्—गेहानुप्रपात-
१० मास्ते । दाम्नी (३।२।१८२) इति ष्ट्रन्—पत्रम् । पतिचण्डिभ्यामालञ् (उ० (१।११६) पातालम् । पतेरङ्गच् पक्षिणि (उ० १।४१२) पतङ्गः । पतेरश्वलः (उ० ३।७४)—पत्सलः । अमिनक्षि (उ० ३।१०५) इत्यन्नन्—पतन्नम् । वीपतिभ्यां तनन् (उ० ३।१५०) पत्तनम् । पतस्थ च (उ० ४।१२) इतीनिः—पन्थाः । शलिपतिपदिभ्यो निन् (तु० उ० श्वेत० ४।१५) पताका ।
१५ स्पृहिगृहि (३।२।१५८) इति सूत्रात् पतयालुः ॥ ५८१. हुल हिंसासंवरणयोश्च । होलः, हुलः, हुल्लिः, हुडिः उणादौ हुलुर्देशः[2] ॥८२१–८२३॥

**५८२. कथे निष्पाके[3]** । क्वथति । अक्वथीत् । क्वाथः, क्वथः । अस्त्यर्थे (द्र० ५।२।११५) क्वाथिका यवागूः ॥८२४॥

२० **५८३. पथे गतौ[4]** । पथति । अपथीत् । पाथः, पथः ॥८२५॥

**५८४ मथे विलोडने[5]** । मथति । अमथीत् । माथः, मथः ।

---

१. 'हुड्डः' पाठा० ।

२. अत्र 'मेष' इति पाठो युक्तः प्रतिभाति । अमरटीकायां (२।६।७६) मेषपर्यायव्याख्यानान्त 'हुड्डः' नामापि पठति क्षीरस्वामी । तस्मादत्र 'हुडुर्मेषः'
२५ इति युक्तः पाठः । ३. 'क्वथे विपाके' इति काशकृत्स्नधातुपाठे (पृष्ठ १४८) ।

४. काशकृत्स्नः 'पल शल पत् पथा गतौ च' इति पठति (पृष्ठ १४८) ।

५. 'गथे विलोडने—गथति··· गथकः··· ' इत्यादि काशकृत्स्नीय-धातुपाठे तट्टीकायां च पाठः ( पृष्ठ १४८ ) ।

मन्दिवाशि (उ० १।३८) इत्युरच्—मथुरा। मन्थ मन्थे[1] मन्थति। क्र्यादौ (९।४२) मथ्नाति ॥८२६॥

**५८५. टुवम उद्गिरणे।** उद्गिरणं भुक्तस्योर्ध्वगतिः। वमति। वामः, वमः। वमथुः[2]। वमितः। उदित्येके[3]—वान्त्वा वमित्वा। अघृणः खलु वान्ताशी[4]। न शसदद (६।४।१२६) इति ववमुः। ग्लास्नावनुवमाञ्च (१।५५६) इति वा मित्त्वम्—वामयति, वमयति। जिदृक्षि (३।२।१५७) इतीनिः—वामी। नोदात्तोपदेशस्य (७।३।३४) इति निषेधे प्राप्तेऽवमिकमि—चमीनाम् (७।२।३४) इति वृद्धिः, ण्वुल्—वामकः। वामयतेर्ल्युट्—योग-वामनम्। न वमतीत्यवमः। घञि—वामः। अस्त्यर्थे (द्र० ५।२।१००) वामनः। वामी अश्वा ॥८२७॥

**५८६. भ्रमु चलने।** वा भ्राशभ्लाश (३।१।७०) इति वा श्यन्—भ्रमति भ्राम्यति। वा जॄभ्रमुत्रसाम् (६।४।१२४) इत्येत्वाभ्यासलोपौ—भ्रेमुः बभ्रमुः। भ्रान्त्वा, भ्रमित्वा। भ्रान्तः। णे—भ्रामः। भ्रम इति दुर्गः। भ्रमेश्च डूः[5]—अभ्रूः। इन् (दश० उ० १।४६) भ्रमिः। भ्रमेः सम्प्रसारणं किच्च (तु० उ० ४।१२१) इति भ्रूमिर्वायुः। अर्तिकमिभ्रमि (उ० ३।१२२) इत्यरन्—भ्रमरः। दिवादौ (४।९९) शमाद्यर्थः पाठः—भ्राम्यति ॥८२८॥

**५८७. क्षर सञ्चलने।** क्षरति। क्षरिष्यति। क्षारः। क्षारी-णेऽप्यणन्तं क्वचिद्[6] इति ङीप्। क्षरः। अक्षरम् ॥८२९॥

**५८८. क्षल सञ्चये च।** सञ्चलने च। क्षलति। चुरादौ क्षल शौचे (तु० १०।५३) क्षालयति ॥८३०॥

---

१. नैतादृशः क्वचिद् भ्वादौ पठ्यते। मन्थ हिंसासंक्लेशनयोः पूर्वत्र (१।३७) पठ्यते।

२. 'वमथुः' क्वचिन्नास्ति।

३. तुलनीयम्—'टुवमु उद्गिरणे' काशकृत्स्नपाठः (पृष्ठ १४८)।

४. अनुपलब्धमूलम्।

५. नैतादृशं क्वचित्सूत्रमुपलब्धम्। अत्र नञ्पूर्वात् भ्रमेर्बाहुलकाद् उः प्रत्ययो द्रष्टव्यः।

६. तुलना कार्या—ताच्छीलिके णेऽप्यणकृतं भवति। परिभाषावृत्ति सीर-देव, पृष्ठ १३३।

५८९. उदात्ता उदात्तेतः ॥

५९०. षह मर्षणे । मर्षणं क्षमा । अयम् ५९१. उदात्तोऽनुदात्तेत् । सेडात्मनेपदी च । सहते । सिसहिषते[1] । स्तन्भुसिवुसहां चङि (तु० ८।३।११६) इति षत्वम्—पर्यसीषहत्, सः स्विदिस्वदिसहीनां च (८।३।६२) इति सत्वम्—सिसाहयिषति । परिनिविभ्य (८।३।७०) इति षत्वम्—विषहते । सिवादीनां वाऽड्व्यवायेऽपि (८।३।७१) इति षत्वं वा—पर्यसहत पर्यषहत विसहनेऽक्त्येति स्वाक्षादादि[2]पाठान्नास्ति[3] । तीषुसह (तु० ७।२।४८) इति वेट्—सहिता, सोढा । विसोढा सोढः (८।२।११५) इति षत्वाभावः, सहिवहोरोत् (६।३।११२) सोढः । वर्णग्रहणात् साहेरपि सोढा, णिलोपे पूर्वत्रासिद्धे न स्थानिवद्[4] (१।१।५७ वा०) इति ढत्वादि । दाश्वान् साह्वान् मीढ्वांश्च (६।१।१२) इति क्वसौ साह्वान् । शकिसहोश्च (३।१।९९) इति यत्—सह्यम् । ल्युः (द्र० ३।१।१३४) सहनः । सहेः पृतनर्ताभ्यां च (८।३।१०९) इति ण्विः[5]—पृतनाषाट् तुराषाट्, सहेः साडः सः (८।३।५६) इति षत्वम्, षाड्रूपत्वाभावे नास्ति—तुरासाहं पुरोधाय (कुमारसम्भव २।१) इति, नहिवृतिवृषि (६।३।११६) इति दीर्घः । अलङ्कृञ् (३।२।१३६) इतीष्णुच्—सहिष्णुः । अनुपसर्गाल्लिम्पविन्द (३।१।१३८) इति ण्यन्तात् शः—साहयः । संज्ञायां भृतॄ (३।२।४६) इति खच्—सर्वसहः । असुन् (द० उ० ९।४९) सहस् । शकधृषज्ञा (३।४।६५) इति तुमुन्—सहते भोक्तुम् । सहेः षष् क्विप् च—षट् । चुरादौ । (१०।२०४)

१. 'सिषहिषते' इति शुद्धः पाठः ।

२. काशिकायां साक्षादादिगणे (१।४।७४) 'विहसने' इति पठ्यते । गणरत्नमहोदधौ तु 'विसहने, विहसने' इत्युभयं पठ्यते (पृष्ठ ७७) ।

३. षत्वमिति शेषः ।

४. जर्मनसंस्करणे 'पूर्वत्रासिद्धे न स्थानिवद्' इत्यनन्तरमितिपदनिर्देशे सत्यपि वार्तिकमिममबुद्ध्वा पूर्वं सम्पादकेन 'पूर्वत्रासिद्धेन (८।२।१) स्थानिवद्' इत्येवं पाठो विकृतः ।

५. 'सहेः पृतनर्ताभ्यां च' (८।३।१०९) इति सूत्रे 'पृतनाषाहम्, ऋताषाहम्' इत्यत्र षत्वविधायकम्, न ण्विप्रत्ययविधायकम् । ण्विप्रत्ययस्तु 'छन्दसि सहः' (३।२।६३) इत्यनेन भवति । लिपिविशमहोदयेन इयमशुद्धिर्न बुद्धा ।

आधृषाद् वा (१०।२०१) वा णिच्—सहति साहयति ॥८३१॥

५९२. रम क्रीडायाम् । ५९३. अनुदात्तोऽनुदात्तेत् । अनिडात्मनेपदी च । रमते । व्याङ्परिभ्यो रमः, उपाच्च (१।३।८३,८४) परस्मैपदम्—विरमति, उपरमति । अन्तर्भावितण्यर्थोऽत्र सकर्मकः । विभाषाऽकर्मकात् (१।३।८५) यावद् भुक्तमुपरमते, उपरमति । यमरमनमातां सक् च (७।२।७३) व्यरंसीत् । रन्ता । रमणः । रमणी । रमः । रमा । रामः । रामा । रम्यः । स्तम्बकर्णयो रमिजपोः (३।२।१३) इत्यच् स्तम्बेरमः । निकुषि (उ० २।२) इति क्थन्—रथः । रमस्त च (तु० उ० ३।१४) इति रत्नम् । रमेर्देशे हश्च[1] रहः । रण्डा (द्र० उ० १।२१४) । सौ रमेः क्तः पूर्वस्य च दीर्घः (तु० उ० ५।२४) सूरतो बुधः । चकिरम्योरुच्चोपधायाः (उ० २।१४) रुग्मम् ॥८३२॥

५९४. षद्लृ विशरणगत्यवसादनेषु[2] । विशरणम् शातनम्, अवसादोऽनुत्साहः । इतो रुहान्ताः (१।५९८) पञ्चानिटः परस्मैपदिनश्च । पाघ्राध्मा (७।३।७८) इति सदेः सीदः—सीदति । सिषत्सति । असदत् । सदेरप्रतेः (तु० ८।३।६६) इति षत्वम्—परिषीदति,—प्रतिषीदति । सदिस्वञ्ज्योः परस्य लिटि (८।३।११८)—निषसाद । लुपसदचर (३।२।१२१) इति भावगर्हायां यङ्—सासद्यते । सत्सूद्विष (३।२।६१) इति क्विप्, पूर्वपदाद् (८।६।१०६) इति षत्वम्—शुचिषत्, परिषत् उपनिषत्, निषण्णः । सादी निषादी । वसिवपि (उ० ४।१२५) इतीञ् सादिः । णः—निषादः । घञ्—विषादः । सदोऽचि । नौ सदेः (उ० २।१२२) इति ष्वरच्—निषद्वरः पङ्कः । असुन् (द० उ० ९।४९) सदः सभाः । गुधृवीपचिवचि (उ० ४।१६७) इति त्रन्—सत्त्रम् । संज्ञायां समज (३।३।९९) इति क्यप्—निषद्या विपणिः । सादकारयोः कृत्रिमे (६।३।१२२. वा०) दीर्घः—प्रासादः । दाधेट्सि (३।२।१५९) इति रुः—सद्रुः ॥८३३॥

५९५. शद्लृ शातने । शातनं तनूकरणम् । पाघ्राध्मा (७।३।७८) इति शदेः शीयः । शदेः शित (१।३।६०) इति तङानौ—शीयते । शत्स्य-

१. अत्र कश्चित् पाठस्त्रुटितः प्रतिभाति । "रमेश्च (उ० ४.२१४) इति रंहः । देशे ह्रश्च (श्वे० उ० ४।२२०) रहः" इत्येवं पाठेनात्र भाव्यम् ।

२. स्मृतं पुरुषकारे (पृष्ठ ८३) ।

ति। अशादत्। शेद्गतौ तः (६।३।४२) शातयति, शातनः, शातनी गौरादिः (गण० ४।१।४१)। शादस्तृणपङ्कौ। शदः, क्षत्रियापशदः, विशदः। अदिशदि[भूशुभि][1] भ्यः (उ० ४।६५) क्रिन्—शद्रिः। रुशातिभ्यां क्रुन्—(उ० ४।१०३) शत्रुः। शदेर्युच[2] इति रक्—शूद्रः। दाधेट्सिशदसदो ५ रुः। (३।२।१५९) शद्रुः॥८३४॥

८९६. क्रुश आह्वाने रोदने च। क्रोशति। क्रोष्टा। आ-क्रोष्टा। क्रोशः। क्रुशः, उत्क्रोशः। कुररः। सितनिगमिमसि (उ० १।७०) इति तुन्—क्रोष्टून्[3]॥८३५॥

८९७. बुध अवगमने। अवगमनं ज्ञापनम्[4]। बोधति। १० अभौत्सीत्[5]। गतिबुद्धिप्रत्यवसानार्थं (१।४।५२) इति कर्तुः कर्मसंज्ञा—बोधयति शिष्यं धर्मम्। बोद्धा। इगुपध (३।१।१३५) इति कः—बुधः। घञ्-बोधः। मतिबुद्धि (३।२।१८८) इति वर्तमाने क्तः—राज्ञां बुद्धः। दिवादौ (४।६४) बुध्यते। हिक्कादौ (१।६०१) बोधते, बोधति, बोधिता॥८३६॥

१५ ८९८. रुह बीजजन्मनि। बीजस्य जन्माङ्कुरोत्पत्तिः। रोहति। रुहः पोऽन्यतरस्याम् (७।३।४३) रोपयति, रोहयति। घञर्थे कविधानाद् (द्र० ३।३।५८ वा०) बीजरुहाकरोति[6] केशाश्छिन्नरूहाः। के (द्र० उ० १।११६) रुहो मृगः, प्ररुहः। प्ररोहः, आरोहः। रूढः। रूढिः। रुहे-र्वृद्धिश्च (उ० १।४७) इति रौहिषं तृणम्, रौहिषो मृगश्च। हपिशिरुहि

---

२० १. कोष्ठान्तर्गतोऽयं पाठस्त्रुटित इति प्रतिभाति 'भ्यः' इति बहुवचनदर्श-नात्। लिविशमहोदयेन नैतत् परिज्ञातम्।

२. 'शदेरूच्च' इति युक्तः पाठः स्यात्। श्वेतवनवासी तु 'शदेरू च' (उ० २।१८) इत्येवं पठति। अन्यत्र 'शुचेर्दश्च' इति पाठः।

३. सर्वनामस्थानेषु तृज्वद्भावविधानात् (अ० ७।१।९५) शसो रूप-२५ मुदाहृतम्।

४. 'संज्ञापनम्' पाठा०।

५. 'अभौत्सीत्' इति सार्वत्रिकोऽप्यपपाठः।

६. साक्षात्प्रभृतिषु (गण० १।४।७४) बीजरुहा शब्दः पठ्यते, तेनात्र गतिसंज्ञा।

(उ० ४।११९) इतीन्—रोहिर्मृगः । हसृरुहियुषिभ्य इतिः (उ० १।९७) रोहित् । रुहेरश्च लो वा (उ० ३।९४)—लोहितः, रोहितः, रोहिणी । अन्यत्रापि च (तु० उ० २।३६) इतीनच्—रोहिणः ॥८३७॥

५९९. अनुदात्ता उदात्तेतः ॥

६००. कुच सम्पर्चन-कौटिल्य-प्रतिष्टम्भ-विलेखनेषु । सम्पर्चनं मिश्रता, प्रतिष्टम्भो रोधनम्, विलेखनं कर्षणम् । संकोचयति । संकुचितः । के (द्र० ३।१।१३५) कुचः । घञ्—संकोच, उत्कोचः । न कादेः (७।३।५९) इति कुत्वं नास्ति ॥८३८॥

६०१. कस गतौ । कसति, उत्कसति । कासयति । विकसितः । कसः, कासः । नीग् वञ्चुस्रंसुध्वंसुभ्रंसुकस (तु० ७।४।८४) इति चनीकस्यते । स्थेशभास (३।२।१७५) इति वरच्—विकस्वरः । खित् कसिपद्यर्तेः (श्वे० उ० १।८३) ऊः—कासूः शक्तिः । समि कस उकन् (श्वे० उ० २।३२)—संकसुकोऽस्थिरः ॥८३९॥

६०२. उदात्तानुदात्तेतौ । एतौ सेटकौ परस्मैपदिनौ च ॥

६०३. वृत् । ज्वलादयो वृत्ताः ॥

६०४. हिक्क अव्यक्ते शब्दे[1] । इतो गुहपर्यन्ताः (१।६३४) षट्त्रिंशत्[2] सेट उभयतोभाषाश्च । हिक्कते, हिक्कति । हिक्का । हिक्कितम् ॥८४०॥

६०५. अचि गतौ[3] । अञ्चते, अञ्चति[4] । अञ्च्यते । अञ्चितः । अञ्चु गतौ (१।११६) अञ्चति, अच्यते । अक्तः । अचु इत्येके—अचति, अचित्वा, अक्त्वा, अक्तः ॥८४१॥

६०६. टुयाचृ याच्ञायाम् । याचते, याचति । अययाचत् ।

---

१. 'हिक्क गतौ' इति काशकृत्स्नः । संतोषगतौ इति तट्टीकाकारः (पृष्ठ १५०)।

२. 'त्रयस्त्रिंशत्' 'त्रयोविंशति' इत्यपपाठौ ।

३. स्मृतमिदं पुरुषकारे (पृ० ५१) धातुवृत्तौ च (१५८) । 'अञ्चु व्यय गतौ' इति काशकृत्स्नः । अञ्चुञ् व्यये गतौ च इति तु शकटायनः ।

४. 'गतौ नलोपः' इति काशकृत्स्नसूत्रेण गतौ अचति । द्र० तट्टीका पृष्ठ १५१ ।

याचितः । यजयाच (७।३।६६) इति कुत्वाभावः—याच्यम् । ड्वितः क्त्रिः (३।३।८८) याचित्रिमम् । ट्विदिति दुर्गः[1]—याचथुः (द्र० ३।३।८९) । यजयाचयत (३।३।९०) इति नङ्—याञ्चा ॥८४२॥

६०७. रेट्ट परिभाषणे । रेटते, रेटति । अरिरेटत् ॥८४३॥

५ ६०८. चते चदे च याचने[2] । चकारो भाषार्थे[3] रेट्टर्थः[4] । मन्दिवाशि (उ०।१।३८) इत्युरच्—चतुरः । चतेरुरन् (उ० ५।५८) चत्वारः । चतेर्वरच्[5]— चत्वरम् ॥८४४, ८४५॥

६०९. प्रोथृ[6] पर्याप्तौ । पर्याप्तिः पूर्णता । प्रोथते, प्रोथति । अपुप्रोथत् । प्रोथोऽश्वघ्रोणा । प्रियं प्रोथमनुव्रजेत्[7] ॥८४६॥

---

१० १. काशकृत्स्नचन्द्रमैत्रेयसायणादयः ट्वितं पठन्ति ।

२. अयमेव पाठश्चन्द्रस्य । काशकृत्स्नशाकटायनसायणानां 'याचने च' ।

३. 'भाषार्थे' क्वचिन्न । ४. धातोरुत्तरं पठ्यमानश्चकारो रेट्टधातुमनुकर्षति । तेन 'रेट्ट' धातोः परिभाषणं याचनं चार्थः । इदमेव मत्वाह हेमचन्द्रः—रेट्ट (ग्) परिभाषणयाचनयोः (धातुपारा० १।८९७) । क्षीरस्वामिनस्त्वत्र पाठो व्यस्त इति १५ प्रतिभाति । वयं तु मन्यामहे 'चते चदे च याचने' इति कस्यचित्प्राचीनस्य श्लोकबद्धस्य धातुपाठस्यायमंशः । छन्दोऽनुरोधेन च चकारो भिन्नक्रमः, पूर्वधात्वर्थसमुच्चयार्थः । एवं चाष्टाध्यायामपि दृश्यते—'पक्षिमत्स्यमृगान् हन्ति, परिपन्थं च तिष्ठति' इत्यत्रोत्तरसूत्रे हन्त्यर्थसमुच्चायकश्चकारो मध्ये पठ्येत ।

५. उणादौ (२।१२१) च तेः ष्वरच्प्रत्ययो विधीयते ।

२० ६. काशकृत्स्नधातुपाठे 'प्रथृ पृथृ पृतृ व्याप्तौ' (पृष्ठ १५३) इति त्रयो धातवः पठ्यन्ते । तथा सति पृथुपृथिव्यादिषु 'प्रथ विस्तारे' इत्यस्मात् सम्प्रसारणविधानमनर्थकमेव । वस्तुतस्तु 'यज इज, वप उप, प्रथ, पृथ' इत्यादयो मूलतो द्विरूपाः धातवः । यास्कोऽपि 'तद्यत्र स्वरादनन्तरान्तस्थान्तर्धातुर्भवति तद्द्विप्रकृतीनां स्थानमिति प्रदिशन्ति । तत्र सिद्धायामनुपपद्यमानायामितरयोपपिपादयिषेत । २५ तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति' (निरुक्त २।२) इति वदन् द्विरूपान् धातून् स्वीचकार । यजसमानार्थकस्य इजधातोः प्रयोगोऽप्युपलभ्यते । यथा—'यानि यज्ञेष्विहेज्यन्ति (महा० शान्ति० २६३।२९) इति ।

७. अनुपलब्धमूलम् । लिविशेनात्र महाभाष्यस्य (१।४।५६) संख्या निर्दिष्टा, न तत्रैतादृशः पाठः ।

६१०. मिथृ मेथृ[1] मेधाहिंसनयोः । मेथते, मेथति । किति गुणनिषेधफलपार्थं द्वौ—मिथ्यते, मेथ्यते । अमिमेथत् । मेथोऽन्त्रि । गौरादौ (गण० ४।१।४१) मेथी । मेथीवद्धोऽपि हि भ्राम्यन् घासग्रासं करोति गौः (द्र० सुभाषितावली २९५८) । अमरसिंहस्तु—पुंसि मेथिः खले दारु न्यस्तं यत् पशुबन्धने । (२।९।२५) । मिदृ मेदृ इति दुर्गः ॥८४७,८४८॥ ५

६११. मेधृ संगमे च । चकारात् मेधाहिंसनयोः । मेधते, मेधति, अमिमेधत् । मेधा । मेध्यम् । गृहमेधी । अश्वमेधः । मेधिः ॥

६१२. णिदृ णेदृ कुत्सासंनिकर्षयोः । प्रणेदति । निद्यते, नेद्यते । अनिनेदत् । णिधृ णेधृ इति प्राच्चो हेवाकिनः[2] ॥८५०, ८५१॥

६१३. शृधु मृधु उन्दे । उन्दः क्लेदनम् । शर्धते, शर्धति । १० शृद्ध्वा, शर्धित्वा । शृद्धः । शृधु शब्दकुत्सायाम् (१।५०६) शर्धते । मर्धते मर्धति । मृधं समरः ॥८५२,८५३॥

६१४. बुध बोधने । बोधते, बोधति । बुधिर् इति नन्दी[3]—अबुधत्, अबोधीत् । बोधिता । पूर्वस्य (१।५९७) बोद्धा ॥८५४॥

६१५. उबुन्दिर् निशामने । निशामनमालोचनम्[4] । बुन्दते, १५ बुन्दति । अबुदत्, अबुन्दीत् । बुत्त्वा, बुन्दित्वा । बुन्नः । धान्तोऽयमिति नन्दी[5] । उबेदिर् इत्यन्ये ॥८५५॥

६१६. वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । वादित्रं वाद्यभाण्डम्, तस्य वादनार्थं ग्रहणम् । वेणते, वेणति, अविवेणत् । रास्नासास्ना ( उ० ३।१५ ) इति वीणा । इन् ( दश० उ० १।४६ ) २०

---

१. स्मृतोऽयं पाठः (धातुवृत्ति पृष्ठ १५६, पुरुषकार पृष्ठ ८०) । सि० कौ० अत्र द्रष्टव्या ।

२. अस्पष्टार्थोऽयं पाठः ।

३. काशकृत्स्नोऽपि इरिदितमाह (पृष्ठ १५४) अनिरितं चन्द्रः(१।५९९) ।

४. 'चाक्षुषज्ञानम्' इत्यधिकं क्वचित् ।

५. 'उचुन्दिर्' इति चन्द्रः (१।६००) काशकृत्स्नधातुपाठे 'चुदिर् निशामने' २५ इति पठ्यते (पृष्ठ १५४), परन्तु तट्टीकायां 'चुन्दति चुन्दते' इत्युदाहरणदर्शनात् 'चुन्दिर्' इति शुद्धः पाठो द्रष्टव्यः ।

वेणिः, वेणिका, वेणी । वेनिस्तु वीज्याज्वरिभ्यो निः (उ० ४।४८) । णः—वेण्णाख्या नदी ॥८५६॥

६१७. खनु अवदारणे । खनते, खनति । खात्वा, खनित्वा । जनसनखनां सञ्झलोः (६।४।४२) आत्वम्—खातः । ये विभाषा (६।३।४२) ५ खायते, खन्यते । गमहनजनखन (६।४।९८) इत्युपधालोपः—चख्नुः । ई च खनः (३।१।१११)—खेयः । शिल्पिनि ष्वुन्, नृतिखनिरञ्जिभ्यश्च (३।१।१४५, सूत्रं वार्तिकं च) खनकः । जनसनखनक्रम (३।२।६७) इति विट्—बिसखाः । अन्येष्वपि दृश्यते (३।२।१०१) डः—परिखा । खन्यते—खम् । डित् खनेर्मुट् चोदात्तः (उ० ५।२०)—मुखम् । अर्तिलूधूसूखन (३।२।१८४) इतीत्रन्—१० खनित्रम् । उषिखनिभ्यां कित् (उ० ४।१६२) खात्रम् । आङ्परयोः खनिशॄभ्यां डिच्च (उ० १।३३)—आखुः । खनिकष्यज्यसि (तु० उ० ४।१४०) इतीन्—खनिराकरः । आङि पणिपनिपतिखनिभ्यः (उ० २।४५) इकन्—आखनिकः । खनो घ च (३।२।१२५)—आखनः ॥८५७॥

६१८. चीव आदानसंवरणयोः । [ चीवते, चीवति । ] १५ चीवृ इति दुर्गः—अचिचीवत् । छित्वरादौ ( द्र० उ० ३।१ ) चीवरं मुनिवासः ॥८५८॥

६१९. चायृ पूजानिशामनयोः । चायते, चायति, अचचायत् । चायः की (६।१।३५) लिटि—चिक्युः । स्वपिस्यमिव्येञां यङि[1], (६।१।१९) चायः की ( ६।१।२१ )—चेकीयते । अपचितश्च ( ७।२।३० ), पक्षे—२० अपचायितः । वक्तव्यात्[2] (७।२।३० वा०) अपचितिः । चायः की च (तु० उ० १।७४) इति तुः—केतुः ॥८५९॥

६२०. व्यय गतौ । व्ययते, व्ययति । व्याययति । ह्म्यन्तक्षण (७।२।५) इति—अव्ययीत् । चुरादावन्तः (१०।३१६) व्यययति ॥८६०॥

६२१. दाशृ दाने । दाशते, दाशति । अददाशत् । क्वसौ—२५ दाश्वान् (६।१।१२) साधुः । दाशगोघ्नौ सम्प्रदाने (३।४।७३) । पुरो

१. 'चायः की' सूत्रं षष्ठाध्याये प्रथमे पादे: द्विः पठ्यते, कतमस्यात्रग्रहणमिति परिज्ञानार्थंतत् सूत्रं निर्दिश्यते ।

२. 'क्तिनि नित्यमिति वक्तव्यम्' इत्यनेनेति शेषः ।

दाश्यते—पुरोडाशः, पृषोदरादित्वात् (६।३।१०९) डत्वम्, एवं दुःखेन दाश्यते दूडाशः। दाशृ दान इति कौशिकः ॥८६१॥

**६२२. अय गतौ।** अयते। उद्यति दिननाथः। (द्र० १।२१८)

**६२३. भेषृ भ्रेषृ भये। ६२४. भ्रेषृ चेलने च।** भेषते, भेषति। अबिभेषत्। भेषयति। बिभेतेः (३।२) मुण्डो भीषयते (द्र० ७।३।४०)। भ्रेषते, भ्रेषति। भ्रेषः ॥८६३,८६४॥ ५

**६२५. अस गतिदीप्त्यादानेषु।** असते, असति। लावण्य उत्पाद्य इवास यत्नः (कुमारसंभव १।३५) इत्यत्र आसेत्यसतेरिति वामनः (काव्यालं० ५।२।२७) अस्तेरित्येके। अदादौ अस भुवि (२।५८) अस्ति। [अष इत्येके[1]] ॥८६५॥ १०

**६२६. स्पश बाधनस्पाशनयोः।** स्पाशनं ग्रन्थनम्[2]। स्पशते, स्पशति। सेयमुभयतः स्पाशा रज्जुः,[3] स्पशश्चरः। पस्पश उपोद्घातः। चुरादौ स्पश बाधने[4] (तु० १०।१३१) पश बन्धने (१०।१६६)—स्पाशयते, पाशयति। पष इत्येके[5]—पाषः, पाषाणः ॥८६६॥

**६२७. लष कान्तौ।** कान्तिरिच्छा वा। भ्राशभ्लाश (३।१।७०) इति वा श्यन्—अभिलष्यते, अभिलषते, अभिलष्यति अभिलषति। जुचङ्क्रम्य (३।२।१५४) इत्युकञ्—अभिलाषुकः। लषेः श च (दश० उ० ५।५४) इत्युनन्—लशुनम् ॥८६७॥ १५

**६२७. चष भक्षणे।** चषते, चषति। चाषः। चषकः। सानसिवर्णसि (उ० ४।१०७) इति चषालो यूपकटकः ॥८६८॥ २०

१. उद्धृतमिदं धातुवृत्तौ (पृष्ठ १५८)। अत्र पाठस्त्रुटितः प्रतिभाति।

२. 'स्पश बाधनस्पर्शनयोः। स्पर्शनं ग्रथनम्' इति स्वामी (द्र० धातुवृत्तिः पृष्ठ १५८)।

३. द्र०—सैषोभयतः स्पाशारज्जुर्भवति (महा० ६।१।६८)।

४. 'स्पश ग्रहणसंश्लेषणयोः' इति चुरादौ (१०।१३१) पाठः। तत्र च 'भ्वादौ स्पश बाधने' इत्युक्तम्। २५

५. उद्धृतं धातुवृत्तौ (पृष्ठ १५८)। अत्र 'एके' पदेन दुर्गोऽभिप्रेतः। यदाह चुरादौ (१०।१६६) 'उभयत्रापि मूर्धन्यान्त इति दुर्गः'।

**६२९. छष हिंसायाम्** । [छषते, छषति] ॥८६९॥

**६३०. झष आदानसंवरणयोः** । झषते, झषति । झषः । झष हिंसार्थः (१।४५८) झषति ॥८७०॥

**६३१. भ्लक्ष भक्षणे**[1] । प्लक्ष इति दुर्गः ॥८७१॥

**६३२. दासृ दाने** । दासते, दासति । दासः । आद्यो (१।६२०) दाय्, अयं दाश्‌ इत्येके ॥८७२॥

**६३३. माहृ माने** । मानं वर्तनम् । माहा गौः ॥८७३॥

**६३४. गुहू संवरणे** । ऊदुपधाया गोहः (६।४।८९) गूहते, गूहति, अघुक्षत । तङि तु लुग् वा दुहदिहलिहगुह (७।३।७३) इत्यगूढ अघुक्षत । सनि ग्रहगुहोश्च (७।२।१८) इति नेट्—जुघुक्षति । चङि ह्रस्वो नेष्यते—अजुगूहत् । गूढा, गूहिता । गूढः । भिदादौ (गण० ३।३।१०४) गुहा गिर्योषध्योः । के (द्र० ३।१।१३५) गुहः । शंसिदुहिगुहिभ्यः क्यप् वा (३।१।१०९ वा०) गुह्यम्, गूह्यम् । उणादौ—गह्वरः (द्र० उ० ३।१) गुहेर्गहिः—गहनम् ॥८७४॥

**६३५. उदात्ताः स्वरितेतः** ॥

**६३६. श्रिञ् सेवायाम्, उदात्तः** । श्रयते, श्रयति । श्रयिता । णिश्रिद्रुस्रुभ्यः कर्तरि चङ् (३।१।४८) अशिश्रियत् । सनीवन्तर्ध (७।२।४९) इति नेट्—शिश्रीषति । शिश्रयिषति । यस्य विभाषा (७।२।१५) इति इति वेट्—श्रितः । श्र्युकः किति (७।२।११)—श्रित्वा । श्रिणीभुवोऽनुपसर्गे (३।३।२४) वा घञ्—श्रायः, श्रयः[2] । उदि श्रयतियौति (३।३।४९) इति घञ्—उच्छ्रायः । बाहुलकात्[3] पतनान्ताः समुच्छ्रयाः (रामा० ९।१०५।१६)

---

१. उद्धृतमिदं धातुवृत्तौ (पृष्ठ १५९) ।

२. सर्वहस्तलेखेषु वा पठ्यते 'श्रायः श्रयः' इति चोदाहृियेते, कुतो वा ग्रहणं संबध्नाति ग्रन्थकार इति न ज्ञायते ।

३. कृत्यल्युटो बहुलम् (३।३।११३) इत्यत्र निर्दिष्टाद् बहुलग्रहणादिति भावः । लिबिश्महोदयेन त्वेतदपरिज्ञाय चौरादिकस्य 'बहुलमेतन्निदर्शनम्' (१०।२२४) इति सूत्रस्य निर्देशः कृतः । काशिकाकारस्तु सिंहावलोकितन्यायेनोत्तर-सूत्रस्थं विभाषाग्रहणं संबध्नाति ।

महा० शान्ति० ३३०।२०)[1]। वहिश्रिश्रु (दश० उ० १।२१) इति णिः—श्रेणिः। क्विब् वचिप्रच्छि (उ० २।५७) इति क्विब्दीर्घौ—श्रीः। श्मनि श्रयतेर्डुन् (उ० ५।२८) श्मश्रु। श्रयतेः स्वाङ्गे शिर् किच्च (दश० उ० ९।५४ कपाठः) इत्यसुन्-शिरः। आङि श्रिहनिभ्यां ह्रस्वश्च (उ० ४।१३८) इतीन् डित्—अश्रिः॥८७५॥

६३७. हृञ् हरणे। इतश्श्रिञ्पर्यन्ता (१।६८९) अष्टषष्टिरनिटः, परस्मैपदिनश्च ञित्वाद्धर्जम्। हरते, हरति। हरतेर्गतिताच्छील्ये (१।३।२१ वा०) तङ्—पैतृकमश्वा अनुहरन्ते। व्यवहृपणोः समर्थयोः (२।३।५७) षष्ठी—शतस्य व्यवहरति हर्ता। ऋद्धनोः स्ये (७।२।७०) इतीट्-हरिष्यति। हृक्रोरन्यतरस्याम् (१।४।५३) णौ कर्मसंज्ञा—हारयति भारं चैत्रेण, चैत्रं वा। श्याद्व्यधा (३।१।१४१) इति णः—अवहारो ग्राहः। हरतेरनुद्यमनेऽच् (३।२।९) रिक्तहरः[2]। वयसि च (३।२।१०) कवचहरः। आङि ताच्छील्ये (३।२।११) पुष्पाहरः। हरतेर्दृतिनाथयोः पशौ (३।२।२५) इतीन्—दृतिहरिः, नाथहरिः। अध्यायन्यायोद्यावसंहार (३।३।१२२) इति करणे घञ् अध्याहारः। हसृरुहियुषिभ्य इतिः (उ० १।९७) हरिद् वर्णो दिक् च। श्यास्त्याहृञ् (उ० २।४६) इतीनच्-हरिणः। हृश्याभ्यामितन् (उ० ३।९३) हरितः। वृहोः षुग्-दुकौ च (तु० उ० ४।१००) इति कयन्-हृदयम्। पद्दन्नादौ (द्र० ६।१।६३) हृत् प्रकृत्यन्तरमप्यस्ति। हृपिषि (तु० उ० ४।११९) इतीन् हरिः। जनिहृभ्यामिमनिन् (दश० उ० ६।७८) हरिमाणं च नाशय (ऋ० १।५०।११)। हृभृधृसृ (तु० दश० उ० ६।७६) इति ईमनिन्-हरीमा। वेञो डिन्, प्रे हरतेः कूपे (दश० उ० १।६२,६३) प्रहिः। कृहृभ्यामेणुः (तु० उ० २।१) हरेणुर्गन्धद्रव्यम्, सस्यभेदश्च॥८७६॥

६३८. भृञ् भरणे। भरते, भरति। ह्वादौ डुभृञ् (३।५) बिभर्ति। भारः। भृतः। क्र्यादौ भृ भरणे (९।२०) भृणाति। भरः ऋदोरप् (३।३।५७)। भरितः। संज्ञायां भृतॄ (३।२।४६) इति खच्-विश्वम्भरा। अवे भृञः (उ० २।३) कथन्-अवभृथो यज्ञान्तः[3]। अण्डन् कृसृभृवृञः (उ०

१. अत्र लिबिशमहोदयेन काशिकाया (३।३।४६) एव निर्देशः कृतः, न त्वाकरग्रन्थस्य। २. 'रिक्थहरः' इति तु शुद्धः पाठः।

३. सोमयज्ञानां समाप्तौ क्रियमाणं स्नानमवभृथशब्देनोच्यते।

१।१२९) भरस्व आपवनम्[1] । भृशम् । भृङ्गः । भुरिक् छन्दः । कुभ्रश्च (तु० उ० १।२२) इति बभ्रुः । भरतः । भरुर्देशः[2] ॥८७७॥

६३९. कृञ् करणे[3] । करते, करति । स्वादौ कृञ् हिंसायाम् (५।७) कृणुते, कृणोति । तनादौ डुकृञ् करणे (८।११) कुरुते, करोति ।
५ उणादौ कारुः, कारिः, करणिः सदृशः करेणुः, क्रतुः, करकः=कलशादिः, कृकः, कर्कः=सितः, चक्रम्, करण्डः, कर्म, करम्भः, कृसरः ॥८७८॥

६४०. णीञ् प्रापणे । प्रापणमासादनम् । नयते, नयति । प्रणेता । संमानन (१।३।३६) इत्यात्मनेपदम्—नयते चार्वी[4] लोकायते ।
१० कर्तृस्थे चाशरीरे कर्मणि (१।३।३७) क्रोधं विनयति । अदिखादिनीवहीनां प्रतिषेधाद्[5] (द्र० १।४।५२ वा०) नाययति भारं ग्रामं चैत्रेण ।

---

१. 'आवपनम्' क्वचिन्नास्ति । २. मरुकच्छ (भड़ौच) नाम्ना प्रसिद्धः ।

३. स्मृतोऽयं पाठः पुरुषकारे (पृष्ठ ३८) । अत्रेदमवधेयम्—प्रायेण सर्वे एव प्राचीना देव-पाल्यकीर्ति-हेमचन्द्र-दशपाद्युणादिवृत्तिकारादयः कृञं स्वादौ
१५ पठन्ति । अस्य स्वादिस्थस्यैव प्रयोगाः पालिप्राकृतभाषयोरुपलभ्यन्ते । हिन्दीभाषायामपि 'करता है' इति अस्यैवापभ्रंशः, न तु करोतेः । एतेन कृञो स्वादिष्वविगीत एव पाठः। सायणेन 'उप्रो षु शृणुहि' (ऋ० १।८२।१) मन्त्रव्याख्याने धातुवृत्तौ (पृष्ठ १६३) चास्य महता प्रपञ्चेन स्वादित्वं निराकृतम् । ये च तत्र हेतवो निर्दिष्टास्ते सर्वे हेत्वाभासा एव । भट्टोजिदीक्षितादयः सायणमेवानुययुः । वस्तुतः कृञो स्वादा-
२० वेव पाठः, न तु तनादौ । अत एव पाणिनिना 'तनादिकृञ्भ्य उः' (३।१।७९) सूत्रे तनादिभ्यः पृथक् कृञः पाठः कृतः । सति तनादौ, कृञः पृथक् पाठोऽनुचित एव । कदाचिदुत्तरकालीनैरयं तनादिषु प्रक्षिप्तः स्यात् । तनादिकृञ्भ्य उः इति सूत्रस्थमहाभाष्याच्चैतत् प्रतीयते यत् पतञ्जलेः प्रागेवास्य धातोः तनादिषु प्रक्षेपो बभूव । एतत् सर्वमवबुध्य दीर्घदर्शिना स्वामिदयानन्देन 'अवरुद्धमदीमहि' (यजुः
२५ ३।५८) मन्त्रव्याख्यान उक्तम्—"डुकृञ् करणे इत्यस्य स्वादिगणान्तर्गतपाठात् श्नुविकरणोऽत्र गृह्यते, तनादिभिः सह पाठादुविकरणोऽपि ।" अत्र तनादिभिः सहपाठादित्यस्य 'तनादिकृञ्भ्य उः' इति सूत्रपाठात् इत्यर्थो ज्ञेयः ।

४. 'चार्वाकः' पाठा० । काशिकायां (१।३।३६) 'चार्वी' इत्येव पाठः ।

५. 'प्रतिषेधे' पाठा० ।

विपूयविनीय (३।१।११७) इति विनीयः कल्के साधुः । आनाय्योऽनित्ये (३।१।१२३)—आनाय्यो दक्षिणाग्निः, आनाय्यो गोधुक्[1] । प्रणाय्योऽसम्मतौ[2] (३।१।११८)—प्रणाय्यायान्तेवासिने ब्रह्म ब्रूयात् (तु० छा० उ० ३।११।५) असम्मतसंसारायेत्यर्थः । पाय्यसान्नाय्य (३।१।१२९) इति सान्नाय्यं हविः । दुन्योरनुपसर्गे (३।१।१४२) इति कर्तरि णः— नायः । श्रिणीभुवोऽनुपसर्गे (३।३।२४) घञ्—नायः । बाहुलकाद्[3] नयः । अवोदोर्नियः (३।३।२६)—अवनायः, उन्नायः । परिन्योर्नीणोर्द्यूताभ्रेषयोः (३।३।३७)—परिणायः । जालमानायः (३।३।१२४) । सत्सूद्विष (३।२।६१) इति क्विप्—ग्रामणीः । दाम्नीशस (३।२।१८२) इति ष्ट्रन्—नेत्रम् । रक् (द्र० उ० २।१३) —नीरम् । नप्तृनेष्टृ (उ० २।९६) इति नेष्टा ऋत्विक् । हनिकुषि (उ० २।२) इति क्थन्—सुनीथः । नयतेर्डिच्च (उ० २।१०१) इति ऋः—ना नरौ नरः । पानीविषिभ्यः पः (उ० ३।२३) नीपः । नियो मिः (उ० ४।४३)—नेमिः ॥८७९॥

६४१. धेट् पाने[4] । टकार स्तनन्धयीत्यादौ ङीबर्थः[5] (द्र० काशिका ३।३।२९) । धयति । विभाषा धेट्श्व्योः (३।१।४९) चङ्— अदधत्, अधासीत् । विभाषा घ्राधेट्शा (२।४।७८) इति सिज्लुक्— अधात् । पाघ्रा (३।१।१३७) इति शः—उद्धयः । नासिकास्तनयोर्ध्माधेटोः (३।२।२९) खश्—स्तनन्धयः । नाडीमुष्ट्योश्च (३।२।३०) मुष्टिन्धयः । दाधेट्सिशदसदो रुः (३।२।१५९) धारुर्गाः । धः कर्मणि ष्ट्रन् (३।२।१८१)— धात्री । धेट इच्च (उ० ३।३४) —धेनुः । ध्यायतेस्तु (१।६३७) धीः, क्ते

१. यथा तु महाभाष्यं तथा दक्षिणाग्नावेवेदं निपातनम्, तत्रापि यस्य दक्षिणाग्नेर्गार्हपत्याग्निरेव योनिस्तत्रैव । तेन वैश्यकुलादाहृते दक्षिणाग्नावपि 'आनेय' इत्येव भवति । गोधुक्शब्दार्थे 'आनाय्य' पदमन्यत्र न दृष्टम् ।

२. 'संमते' पाठा० ।

३. कृत्यल्युटो बहुलम् (अ० ३।३।११३) इति बहुलवचनादिति भावः । एतदपरिज्ञाय लिबिशमहोदयेन अत्र 'बहुलमेतन्निदर्शनम्' (१०।३२४) इति धातुसूत्रस्य संख्या निर्दिष्टा ।

४. 'धयत्यादयोऽनुदात्ता उदात्तेतः' इति धातुवृत्तिः (पृष्ठ १८४) । तत्रोदात्तेत्त्वं सति सम्भवे ज्ञेयम् । ५. स्मृतं धातुवृत्तौ (पृष्ठ १६६) ।

(६।४।६६) धीतः[1] ॥८८०॥

**६४२. ग्लै हर्षक्षये ।** हर्षक्षयोऽत्र धात्वपचयः[2] । ग्लायति । वान्यस्य संयोगादेः (६।४।६८) इति लिङि एत्वम्—ग्लेयात्, ग्लायात् । ग्लास्नावनुवमां च (१५५६) इति वा मित्त्वम्—ग्लपयति, ग्लापयति । ५ संयोगादेरातो धातोर्यण्वतः (८।२।४३) निष्ठानत्वम्—ग्लानः । ग्लाजिस्थश्च क्स्नुः (३।२।१३९)—ग्लास्नुः । ग्लातुदिभ्यां डौ (उ० २।६४)—ग्लौश्चन्द्रः । ग्लाज्याहाभ्यो निः (३।३।९५ वा०) ग्लानिः । शकधृषज्ञाग्ला (३।४।६५) इति तुमुन्—ग्लायति भोक्तुम् ॥८८१॥

**६४३. म्लै गात्रविनामे ।** विनामः कान्तिक्षयः । म्लायति । १० म्लेयात, म्लायात् । म्लानः ; बाहुलकान्[3] म्लानिः ॥८८२॥

**६४४. द्यै न्यङ्गविधाने[4] ।** न्यङ्गं कुत्सिताङ्गम् । द्यायति ॥ ८८३॥

**६४५. द्रै स्वप्ने ।** द्रायति । स्पृहिगृहि (३।२।१५८) इत्यालुच्—निद्रालुः । क्ते (द्र० ८।२।५३) निद्राणः । तारकादित्वात् (द्र० गण० १५ ५।२।३६) निद्रितः । आतश्चोपसर्गे (३।३।१०६) अङ्—निद्रा । द्रा कुत्सितायां गतौ (२।४६) द्राति, विद्राणः ॥८८४॥

**६४६. ध्रै तृप्तौ ।** ध्रायति । ध्राणः । भाष्ये नत्वं नेष्यते[5]—ध्रातः ॥८८५॥

**६४७. ध्यै चिन्तायाम् ।** अधीगर्थदयेशां कर्मणि (२।३।५२) २० षष्ठी—मातुर्ध्यायति । ध्यापयति स्वयमेवेति णेरणौ (१।३।६७) इति तङ् नास्ति, आध्याने निषेधात् । दुष्टं ध्यायति—दुर्ध्यः । आतोऽनुपसर्गे कः (३।२।३) दुरो दाशनाशधमध्येषु (६।३।१०९ वा०) इति ढत्वमुत्वञ्च । आतश्चोपसर्गे कः (३।१।१३६)—आध्यायन्त्येनम् आढ्यः । न ध्याख्यापॄमूर्छि-

---

१. 'धीतम्' पाठा० । २. 'वैराग्यपचये' पाठा० ।

२५ ३. कृत्यल्युटो बहुलम् (३।३।११३) इति बहुलवचनात् ।

४. 'न्यङ्गे' पाठान्तरम् । 'न्यङ्गविमान' इति क्षीरस्वामी (धा० वृ० पृष्ठ १६७)। धैं न्यङ्करणे । कुत्सितमङ्गं न्यङ्गम् इति हेमचन्द्रः (धातु० १।२६) ।

५. महाभाष्ये नैतादृशं वचनं क्वचिदुपलभ्यते ।

मदाम् (८।२।५७) इति न निष्ठानत्वम्—ध्यातः। उणादौ धीः[1]। ध्याप्योः सम्प्रसारणं च (उ० ४।११५) इति क्वनिप्—धीवा। छित्वरछत्वर (उ० ३।१) इति धीवरः। मां ध्यायति–मध्यः[2] आतोऽनुपसर्गे कः (३।२।३)। सन्ध्यायन्त्यस्याम् इति सन्ध्या[3] ॥८८६॥

६४८. रै शब्दे। रायति। कृदाधारा (उ० ३।४०) इति कः—राका। राशदिभ्यां त्रिप् (उ० ४।६७) रात्रिः। रातेर्डैः (उ० २।६६)—रा धनम्। अदादौ रा दाने (२।४६) रातिः[4] ॥८८७॥

६४९. ष्ट्यै स्त्यै शब्दसंघातयोः। ष्ट्यायति[5]। स्त्यायति उभयोपदेशे उपादानाद् धात्वादेः षः सः (६।१।६४) नास्ति[5]। स्त्यः प्रपूर्वस्य (६।१।२३) इति सम्प्रसारणम्, प्रस्त्योऽन्यतरस्याम् (८।२।५४) इति वा निष्ठानत्वम्—प्रस्तीतः प्रतीम्नः। श्यास्त्या (उ० २।४६) इतीनच्—स्त्येनः। स्तेनयतेः (१०।२८७) स्तेनः। स्त्यायतेर्ड्रट् (उ० ४।१६५)—स्त्री ॥ ८८८,८८९॥

६५०. खै खदने[6]। खायति। ल्युटि खानम् आहुः[7] ॥८९०॥

---

१. नैतदुणादौ सिद्ध्यति। ध्यायतेः सम्प्रसारणं च (३।२।१७८ वा०) वार्तिकेनास्य सिद्धिर्भवति।

२. तुलनीयम्—'मां ध्यायतीति मध्यमिति धातुपारायणीयम्' इत्युज्ज्वलदत्तः (उ० वृ० ४।१११)।

३. आतश्चोपसर्गे (३।३।१०६) इत्यङ् भवति।

४. इतोऽग्रे 'धनम्' इत्यधिकं क्वचिद्।

५. काशकृत्स्नधातुपाठीयकन्नडटीकायामपि 'ष्ट्यै' इत्यस्य 'ष्ट्यायति' इति सत्वाभावमेवोदाहृतम् (पृष्ठ ६२)। शाकटायनोऽप्येवमेव। पुरुषकारस्तु मतमिदं स्मृत्वा निराचकार (पृष्ठ १६)। सायणोऽपि तथैव प्रतिपेदे (धा० वृ० पृष्ठ १६८)।

६. खदनं स्थैर्यं हिंसा च इति सायणः (धा० वृ० पृष्ठ १६८)। काशकृत्स्नीयधातुपाठे 'खै खादने' इति पठ्यते, 'भक्षणार्थत्वं च' तट्टीकायां व्याख्यायते (पृष्ठ ७०)

७. काशकृत्स्नधातुपाठीयकन्नडटीकायां 'खानम्' इत्युदाह्रियते (पृष्ठ ७०)। वाक्यमिदं क्वचिन्न।

**६५१. क्षै जै सै क्षये ।** क्षायति । निष्ठायां क्षायो मः (८।२।५३) क्षामः । जायति । जाता । सायति । साता । सायात्—स्यतेर्ग्रहणाद् षत्वं[1] न । असासीत्—स्यतेर्ग्रहणाद् विभाषा घ्राधेट् (२।४।७८) इति सिज्लुक् नास्ति ॥८९१–८९३॥

५ **६५२. कै गै शब्दे ।** कायति, गायति । एतौ शब्दविशेषे रूढौ[2]। इण्भीकापा (उ० ३।४३) इति कन्—काकः[3]। अगासीत्, इणादेशस्य तु गातिस्था (२।४।७७) इति सिज्लुक्[4]—अगात् । भव्यगेय (३।४।६८) इति गेयः कर्तरि साधुः । गस्थकन् (३।१।१४६)—गाथकः । ण्युट् च (३।१।१४७) गायनः । गापोष्टक् (३।२।८) सामग उद्गाता । कमिमनिजनि (उ० १० १।७३) इति तुन्—गातुः । उषिकुषिगा (उ० २।४) इति थन्—गाथा । गश्चोदि (उ० २।१०) इति थक्-उद्गीथ ओंकारः । घुमास्थागापा (३।४।३६) इतीत्वम्—गीतं गानम् । स्थागापापचो भावे (३।३।९५) गीतिः । गाङ् गतौ (१।६८०) गाते ॥८९४,८९५॥

**६५३. स्रै श्रै पाके ।** स्रायति, श्रायति । श्रा पाके (१।५४७) १५ मित्—श्रपयति । श्रातेः (२।४५) श्रपेश्च [ण्यन्तान्मित्त्वे] च शृतं पाके (६।१।२०) साधु ॥८९६,८९७॥

**६५४. पै ओवै शोषणे ।** पायति । पिबादेशो (द्र० ७।३।७८) नेष्यते[4] । इह[5] पा पाने (१।६५७)—पिबति । अदादौ—पा रक्षणे (२।४८) पाति । वायति । ओदितश्च (८।२।४५) इति निष्ठानत्वम्—वानं शुष्कम् । २० कृवापा (उ० १।१) इति वायुः । अदादौ वा गतिगन्धनयोः (२।४२) वाति । चुरादौ वा गतिसुखसेवनयोः (१०।२६७) वापयति ॥८९८,८९९॥

**६५५. ष्णै वेष्टने ।** स्नायति । स्नायुः । अदादौ ष्णा शौचे (२।४५)—स्नाति ॥९००॥

---

१. घुमास्था (६।४।६६) इति सूत्रे स्यतेर्ग्रहणाद् 'एर्लिङि' (६।४।६७) २५ इत्येत्वं नेति भावः । २. स्मृतमिदं धातुवृत्तौ (पृष्ठ १६९) ।

३. कायतेः शब्दविशेषत्वद्योतनायैव तिङन्तमध्ये काकपदनिर्वचनमुक्तम् ।

४. गापोर्ग्रहण इण्पिबत्योर्ग्रहणम् (२।४।७७ वा०) इति वचनात् ।

५. भ्वादावित्यर्थः ।

**६५६. दैप् शोधने ।** पकारो दाधाध्वदाप् (१।१।२०) इति विशेषणार्थः । दायति । अवदातं मुखम् । इह[1] दाण् दाने (१।६६२)—यच्छति, देङ् रक्षणे (१।६८६) दयते, अदादौ दाप् लवने (२।५१) दाति । ह्वादौ डुदाञ् दाने (३।९) दत्ते, ददाति । दिवादौ दो अवखण्डने (४।३९) —द्यति ॥९०१॥

**६५७. पा पाने ।** पाघ्राध्मा (७।३।७८) इति पिबः—पिबति । अदन्तत्वाद् गुणाभावः । घुमास्थागापा (६।४।६६) इतीत्वम्—पीयते । एर्लिङि (६।४।६७)—पेयात् । गातिस्थाघुपा (२।४।७७) इति सिज्लुक्—अपात् । शाच्छासाह्वा (७।३।३७) इति युक्—पाययते, न पादम्याङ्यमाङ्यस (१।३।८९) इति परस्मैपदं नास्ति[2] । लोपः पिबतेरीच्चाभ्यासस्य (तु० ७।४।४) इत्यपीप्यत्—क्रतौ कुण्डपाय्यः (द्र० ३।१।१३०) साधुः । पाय्यसांनाय्य (३।१।१२९) इति पाय्यो माने साधुः । पाघ्राध्मा (३।१।१३७) इति शः—उत्पिबः । अनुपसर्गाण्णः (द्र० ३।१।१४१) पचेति पायः । गापोष्टक्—सुराशीध्वोः पिबतेः (३।२।८ सू० वा०)—सुरापः । पानीयम् । घञर्थे कविधानम् (३।३।५८ वा०) —प्रपा । स्थागापापचो भावे (३।३।९५) पीतिः । कृवापाजि (उ० १।१) इत्युण् पायुः । पातृतुदि (उ० २।७) इति थक्—पीथः । ष्ट्रन् (दश० ८।७६) पात्रम् । मनिन् (दश० उ० ६।७३) पामा । पिबतेरी च (श्वेत० उ० ४।१९५) इत्यसुन्—पयः । पिबतेस्थसुन् (तु० उ० ४।२०३)—पाथः अम्बु । पानीविषिभ्य पः (उ० ३।२३)—पापम् । सानसिवर्णसि (उ० ४।१०७) इति पल्वलम् । पाको[3] बालः । कलापकः[4] । पम्पा[5] सरः ॥९०२॥

**६५८. घ्रा गन्धोपादाने ।** पाघ्रा (७।३।७८) इति जिघ्रः[6]—

---

१. भ्रादावित्यर्थः । २. कर्त्रभिप्राय इति शेषः ।

३. अर्भकपृथुकपाका वयसि (उ० ५।५३) ।

४. द्र० दशपादी-उणादिवृत्तिः ३।५ ॥

५. द्र० दशपादी-उणादिवृत्तिः ७।७ ॥

६. पिबजिघ्रधमादयो वस्तुतः स्वतन्त्रा धातवः । अत एवार्षधातुकेष्वपि जिघ्रधातुरुपलभ्यते । यथा—गोभिलगृह्ये (२।८।२२,२४) अभिजिघ्रय, अभि—जिघ्रणं चेति ।

जिघ्रति । वान्यस्य संयोगादेः (६।४।६८) इति वा एत्वम्—घ्रेयात् घ्रायात् । विभाषा घ्रा (२।४।७८) इति वा सिज्लुक्—अघ्रात् अघ्रासीत् । ई घ्राध्मोः (७।४।३१)—जेघ्रीयते । जिघ्रतेर्वा (७।४।६) इत्—अजिघ्रिपत् अजिघ्रपत् ॥९०३॥

५ **६५९. ध्मा शब्दाग्निसंयोगयोः** । शब्दे, मुखादिना चाग्निसंयोगे । पाघ्राध्मा (७।३।७८) इति धमः—धमति । शः (द्र० ३।१।१३७) विधमः । आध्मातः शङ्खः । नासिकास्तनयोर्ध्माधेटोः (३।२।२०) खश्—नासिकन्धमः । नाडीमुष्टयोश्च (३।२।३०)—नाडिन्धमः । उग्रम्पश्येरम्मदपाणिन्धमाश्च (३।२।३७) । ध्मो धमश्च (तु० उ० २।३५) इति क्वुन्—धमकः । १० अर्तिसृधृधमि (उ० २।१०३) इत्यनिः—धमनिर्नाडी । बाहुलकाद्[1] धमादेशः । धमिः प्रकृत्यन्तरमित्येके[2] । यथा—धान्तो[3] धातुः[4] पावकस्येव राशिः[5] ॥

**६६०. ष्ठा गतिनिवृत्तौ** । स्थस्तिष्ठादेशः (द्र० ३।७८) तिष्ठ-

---

हिरण्यकेशीये (२।४।१७) च 'अभिजिघ्र्य' इत्युपलभ्यते । एवमेव 'घ्रा' धातोरपि 'व्याङि घ्रातेश्च' इत्युणादिसूत्रे (५।६३) शितपि सार्वधातुके जिघ्रादेशो न भवति । १५ एवं धमेरपि । उत्तरधातुसूत्रव्याख्यानं तट्टिप्पणी च द्रष्टव्या । एतद्विषये विशेषतः 'संस्कृत व्याकरण शास्त्र का इतिहास' ग्रन्थस्य प्रथमाध्यायो (पृष्ठ ३८) द्रष्टव्यः ।

१. अत्र लिबिशमहोदयेन 'बहुलमन्यत्रापि' (उ० २।३९) इत्युणादिसूत्रमपरिज्ञाय 'उणादयो बहुलम्' (३।३।१) इत्यस्य संख्या निर्दिष्टा । तुलनीया दशपाद्युणादिवृत्तिः–तथा (बहुलं) धमश्चान्यत्रापि धमादेशो भवति'(द० उ० ३।८ पृष्ठ १३२) २० क्षीरस्वामी दशपाद्युणादिवृत्तिं शब्दतोऽर्थतो वा बहुत्रोद्धरति (द्र० क्षीर० भूमिका) ।

२. कस्येदं मतमिति न ज्ञायते । वस्तुतः पिबजिघ्रधमादीनि । प्रकृत्यन्तराण्येवेत्युक्तम् । तथा च धमेरार्धधातुके स्वयमेव ग्रन्थकृता प्रयोग उदाहृतः । रामायणेऽपि 'विधमिष्यामि जीमूतान्' इति सुन्दरकाण्डे (६७।१२) प्रयुज्यते । अत्र पूर्वधातुस्था टिप्पण्यपि द्रष्टव्या ।

२५ ३. दशपाद्युणादिवृत्तौ (३।९ पृष्ठ १३२) क्वचित् 'धमः' पाठः, क्वचिद् 'धाता' । तत्रापि 'धान्तः' इत्येव युक्तः पाठः । हैमोणादिवृत्तावपि 'धान्तः' इत्येव (३३, पृष्ठ ९) पठ्यते ।

४. दशपाद्युणादिवृत्तौ क्वचित् 'धातुः' नास्ति । (३।८, पृष्ठ १३२) ।

५. 'काञ्चनस्यैव राशिः' इति दशपाद्युणादिवृत्तौ पाठः (३।८ पृष्ठ १३२)

ति। समवप्रविभ्यः स्थः (१।३।२२) इत्यात्मनेपदम्—सन्तिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते। स्थाघ्वोरिच्च (१।२।१७) समस्थित, समस्थिषाताम्। आङः स्थः प्रतिज्ञाने (१।३।२२ वा०) उपसंख्यानम्—अस्तिं सकारमातिष्ठते[1], शब्दं नित्यमातिष्ठते, नित्यत्वेन प्रतिजानीत इत्यर्थः। प्रकाशनस्थेयाख्ययोश्च (१।३।२३)—तिष्ठते कन्या छात्रेभ्यः, श्लाघह्नुङ्स्था (१।४।३४) इति सम्प्रदानसंज्ञा; संशय्य कर्णादिषु तिष्ठते यः (किरात ३।१४)। उदोऽनूर्ध्वकर्मणि, उद ईहायाम् (१।३।२४ सू० वा०) गेह उत्तिष्ठते, मुक्तावुत्तिष्ठते; नेह—पीठादुत्तिष्ठति, ग्रामाच्छतमुत्तिष्ठति। उपान्मन्त्रकरणे (१।३।२५) ऐन्द्र्या गार्हपत्यमुपतिष्ठते[2], आग्नेय्याऽऽग्नीध्रमुपतिष्ठते[3]; नेह—भर्तारमुपतिष्ठति यौवनेन, उपतस्थुः प्रकृतयः। अकर्मकाच्च (१।३।२६) भोजन उपतिष्ठते। उपाद् देवपूजासंगतकरणमित्रकरणपथिषु इति वाच्यम् (तु० १।३।२५ वा०)—आदित्यमुपतिष्ठते, गंगा यमुनामुपतिष्ठते, उपश्लिष्यतीत्यर्थः[4]। रथिकानुपतिष्ठते[5], मित्रीकरोतीत्यर्थः। अयं पन्थाः स्रुघ्नमुपतिष्ठते, प्राप्नोत्यर्थः। वा लिप्सायाम् (१।३।२५ वा०) भिक्षुर्दातॄनुपतिष्ठते, उपतिष्ठति वा। अधिशीङ्स्थासां कर्म (१।४।४६) गृहमधितिष्ठति। घुमास्था (६।४।६६) इतीत्त्वम्—स्थीयते। उपसर्गात् सुनोति (८।३।६५) इति षत्वम्—अधिष्ठास्यति, अधिष्ठानम्। स्थादिष्वभ्यासेन चाभ्यासस्य (८।३।६४) अधितष्ठौ। उदः स्थास्तम्भोः पूर्वस्य (८।४।६१) इति सस्य थः, झरो झरि सवर्णे (८।४।६५) इति तस्य[7] लोपः—उत्थितः[8]। गातिस्था (२।४।७७) इति सिज्लुक्—अभ्यष्ठात्। प्राक्सितादड्व्यवायेऽपि

---

१. महाभाष्ये १।३।२२ आपिशलेरेतन्मतम्। यदाह न्यासकारः—"सकारमात्रमस्तिं धातुमापिशलिराचार्यः प्रतिजानीते।…… 'स भुवि' इति स पठति।" (भाग १ पृष्ठ २२६)।

२. मै० सं० ३।२।४॥

३. मीमांसा-शाबरभाष्ये ३।२।२१ उद्धृतः।

४. 'गंगा……त्यर्थः' क्वचिन्न।

५. इतोऽग्रे 'महामात्रानुपतिष्ठते' इत्यधिकम्।

६. 'श्रुघ्नम्' मूले पाठः। 'द्वारकाम्' इति क्वचित् पाठा०।

७. थस्येत्यर्थः।

८. इतोऽग्रे 'उत्तम्भितः' इत्यधिकम्।

(८।३।६३) इति षत्वम्। अनुवादे चरणानाम्[1], स्थेणोरद्यतन्यां च (२।४।३ सू० वा०) इति द्वन्द्वैकत्वम्—प्रत्यष्ठात् कठकौथुमम्। स्थाघ्वोरिच्च (१।२।१७) उपास्थित। तिष्ठतेरित् (७।४।५) अतिष्ठिपत्। भव्यगेयप्रवचनीय (३।४।६८) इति कर्तरि उपस्थानीयश्चैत्रो गुरोः। ग्रहादौ (द्र० ३।१।१३४) स्थायी।
५ आतश्चोपसर्गे (३।३।१०६) ऽङ्—आस्था, व्यवस्था। प्रष्ठोऽग्रगामिनि (८।३।९२) साधुः। सुपि स्थः (३।२।४) इति कः—समस्थः। योगविभागाद् भावेऽपीष्यते—आखूत्थो वर्तते, अग्न्युत्थो वर्तते। अम्बाम्बगोभूमि (८।३।९७) इति षत्वम्—अम्बष्ठः, आम्बष्ठः, गोष्ठः, भूमिष्ठः। द्यतिस्यति (७।४।४०) इतीत्वम्—स्थितः। गत्यर्थाकर्मक (३।४।७२) इति क्तः—उपस्थितो गुरुं
१० चैत्रः। ग्लाजिस्थश्च क्स्नुः[2] (३।२।१३९) स्थास्नुः। लषपतपद (३।२।१५४) इत्युकञ्—स्थायुकः। स्थेशभास (३।२।१७५) इति वरच्—स्थावरः। घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्। (३।३।५८ वा०) प्रस्थः। स्थागापापचो भावे (३।३।९५) क्तिन्—स्थितिः। अजिरशिशिर (उ० १।५४) इति स्थिरस्थविरौ। स्थाचतिमृजेर् (उ० १।११६) इति स्थाली। सव्ये स्थश्छन्दसि
१५ (उ० २।१०२) इति ऋन्—सव्येष्ठा सारथिः, स्थास्थिन्स्थूणाम् (८।३।९७ तु० वा०) इति षत्वम्। परमे स्थः किच्च[3] इतीन्—परमेष्ठी ब्रह्मा। स्थो णुः (उ० ३।३७) स्थाणुः। स्थः स्तोऽम्बजवकौ च (तु० उ० ४।९६) स्तम्बः स्तबकः। स्थायी भविष्यति गम्यादयः (३।३।३) प्रस्थायी। स्थूणा, स्थूरा जङ्घालोहपुत्तलिका ॥९०५॥

२० **६६१. म्ना अभ्यासे।** अभ्यासः पारम्पर्येण वृत्तिः। म्नो मनः (द्र० ७।३।७८)—आमनति। आम्नायः। नामन्सीमन् (उ० ४।१५१) इति नाम ॥९०६॥

**६६२. दाण् दाने।** णकारो दाणश्च सा चेद (१।३।५५) इत्यर्थः। दाणो यच्छ (द्र० ७।३।७८)—विप्राय यच्छति। दाणश्च सा चेच्च-

---

२५ 1. शाखानां मूलं चरणमुच्यते। तथा च भोजवर्मणः (१२ शताब्द्याः) ताम्रपत्रम्—"जमदग्निप्रवराय वाजसनेयचरणाय यजुर्वेदकण्वशाखाध्यायिने······।" द्र० 'वैदिक वाङ्मय का इतिहास' सस्क० २, पृष्ठ १७३, १७४। 2. 'ग्स्नुः' पाठा०।

3. 'परमे स्थः कित्' इति दश० उ० ६।६१ कपाठः। अमरटीकासर्वस्वकारोऽप्येवमेव पठति, भाग १ पृष्ठ १५, ७५। सरस्वतीकण्ठाभरणेऽपि (२।१।२९२)।

तुर्थ्यर्थे (१।३।५५) इति तङ्—दास्या सम्प्रयच्छते । घुकार्यम्—दीयते (द्र० ६।४।६६), सिज्लुक् (२।४।७७) अदात् । दायादो मूलविभुजादित्वात् (द्र० ३।२।५ वा०), आतोऽनुपसर्गे कः (३।२।३) नास्ति[1] सोपसर्गत्वात् । प्रे दाज्ञः (३।२।६) अन्नप्रदः । गोदः (द्र० ३।२।३) । दो दद्घोः (७।४।४६) दत्तः । अच उपसर्गात् तः (७।४।४७) प्रत्तम् । दस्ति (६।३।१२४) इति दीर्घः —वीत्तम् । दाधेट्सिशदसदो रुः (३।२।१५९)—दानशीलो दारुः ॥९०७॥ ५

**६६३. ह्वृ कौटिल्ये ।** ह्वरति । छित्वरादौ (द्र० उ० ३।१) उपह्वरः ॥९०८॥

**६६४. स्वृ शब्दोपतापयोः ।** स्वरति । समो गम्यृच्छि (१।३।२९) तङ्—संस्वरते । स्वरतिसूति (७।२।४४) इति वेट्—स्वरिता स्वर्ता । सनीवन्तर्ध (७।२।४९) इति सिस्वरिषति सुस्वूर्षति । स्वरः । शॄस्वृस्निहि (उ० १।११) इत्युः—स्वरुर्वज्रम् । स्वारयति । चुरादौ स्वर आक्षेपे (१०।२५०) अदन्तः [स्वरयति] ॥९०९॥ १०

**६६५. स्मृ चिन्तायाम् ।** स्मरति । ज्ञाश्रुस्मृदृशां सनः (१।३।५७) इत्यात्मनेपदम्—सुस्मूर्षते । स्मृ आध्याने (१।५४४) मित्—स्मरयति । अत् स्मृदृत्वर (७।४।९५) इति असस्मरत् । स्मरः । स्मृतिः ॥९१०॥ १५

**६६६. द्वृ वरणे[2] ।** वरणं स्थगनम् । द्वरति । घञ् (द्र० ३।

---

१. दायाद इत्यत्र आङ्पूर्वत्वात् कस्य प्राप्तिर्नास्तीत्यर्थः ।

२. काशकृत्स्नचन्द्रजैनशाकटायनीयेषु धातुपाठेषु क्षीरमैत्रेयदीक्षितादिकृतेषु धातुव्याख्यानेषु, च अविगीतत्वेन 'द्वृ' पठ्यते (अनादरे-मैत्रेयः, संवरणे दीक्षितः) । २० सत्यप्येवं-सायणो धातुवृत्तौ (पृष्ठ ११७) 'क्वचित् पठ्यते' इत्याह । हस्तलेखेषु प्रायेण 'वृ संवरणे' पाठ उपलभ्यते । वस्तुतस्तूभावपि स्वतन्त्रौ धातू । 'द्वृ' धातोः 'द्वाः, द्वारः' इत्यादयः सिध्यन्ति, 'वृ' धातोश्च 'वाः, वारः' इत्यादयो द्वारपर्यायाः । आसीच्च वार-शब्दस्य द्वारार्थे पुरा प्रयोगो लाटदेशे (सौराष्ट्रतो नीचैः) (द्र० तन्त्रवार्तिक १।३।२२) । अस्यैव वारशब्दस्य स्त्रीलिङ्गं 'वारी' पदं (बारी वा) गुर्जरबाहीक- २५ राजस्थानीयभाषासु सम्प्रति गवाक्षार्थे प्रयुज्यते (अत्र ह्रस्वार्थे स्त्रीप्रत्ययः । यथा—घट-घटी) । नीचीनबारं (ऋ० ५।८५।३) जिह्मबारं (ऋ० १।११६।९।।८।४०।५) इत्यादिषु प्रयुज्यमानो बारशब्दोऽप्येतदर्थक एव । तदर्थं 'बृ' धातुरूह्यः । प्रामादिको

३।१९) द्वारम्[1] । द्वारयतेरुणादिक्विन्[2] द्वाः [द्वारौ] द्वारः ॥९११॥

**९६७. सृ गतौ ।** सरति, प्रसरति । पाघ्राध्मा (७।३।७८) इति वेगितायां गतौ धावादेशः[3] —धावति । कृसृभृवृ (७।२।१३) इति नेट्—ससृव । सर्तिशास्त्यर्तिभ्यश्च ( ३।१।५६ ) लुङि अङ्—असरत् । उपसर्या काल्या प्रजने (३।१।१०४) । राजसूयसूर्य ( ३।१।११४ ) इति सूर्यः । प्रुसृल्वः समभिहारे वुन् (३।१।१४९) सरकः । सर्तेर्वः[4] सरति ससर्ति वा—सर्वः[4] । ण्वुल्—अभिसारिका । पुरोऽग्रतोऽग्रेषु सर्तेः(३।२।१८) टः—पुरःसरः, अग्रतःसरः, अग्रेसरः । पूर्वे[5] कर्तरि (३।२।१९) पूर्वसरः । सम्पृच (३।२।१४२) इति—परिसारी । बाहुलकाद्[6] विसारी । प्रे लपसृ (३।२।१४५) प्रसारी । उत्-प्रतिभ्यामाङि सर्तेः (३।२।७८ काशिका)—उदासारी. प्रत्यासारी । जुचङ्क्रम्य (३।२।१५०) इति युच्—सरणः । सृघस्यदः क्मरच् (३।२।१६०) सृमरः । सृ स्थिरे, व्याधिमत्स्यबलेषु च (३।३।१७ सू०,वा०) घञ्—चन्दनसारः,अतीसारः, विसारः, सारम् । प्रजने सर्तेः (३।३।७१) अप्—उपसरो गवाम् । घञ् (द्र० ३।३।१८, १९) आसारः संसारः । बाहुलकाद्[7] विसरप्रसरौ ।

---

वा तत्र बत्वपाठः स्यात् । निरुक्तकारस्तु द्वार-पदम्—'द्वारो जवतेर्वा द्रवतेर्वा वारयतेर्वा' (८।९) इति बहुधा निरवोचत् । तत्तु 'दृवृ' धात्वस्वीकारे द्रष्टव्यम् । प्रायेण हि नैरुक्ता वैयाकरणाश्च स्वकाले स्वसम्प्रदाये वा प्रसिद्धान् धातूनुपादायैव पदनिर्वचनानि ब्रुवते, न मूलधातुनिदर्शनाय प्रयतन्ते ।

१. पूर्वपृष्ठस्था (१३९) टि० २ द्रष्टव्या ।

२. उणादौ क्विन् 'जॄशॄस्तॄजागृभ्यः क्विन्' (उ० ४।५४) इत्येकत्रैव पठ्यते । तत्र च इकारो नानुबन्धः । तस्मादत्र 'क्विप्' इति युक्तः पाठो द्रष्टव्यः । 'द्वा इति ण्यन्तात् क्विपि' इति सायणवचनमप्यत्रानुकूलम् (द्र० धा० वृ० पृष्ठ ११७) ।

३. अत्र ७।३।७८ सूत्रस्था काशिकावृत्तिरनुसंधेया ।

४. उणादौ (१।१५२) वन्प्रत्ययान्तो निपात्यते । ५. 'संज्ञायां पूर्वे' पाठा० ।

६. संपृचादि सूत्रे (३।२।१४२) परिपूर्वात् सरतेर्घिनुण्विधानाद् विपूर्वात् 'कृत्यल्युटो बहुलम्' (३।३।११३) इति वचनात् घिनुण् द्रष्टव्य इति भावः । लिबिशमहोदयेनैतदपरिज्ञायात्र 'बहुलमेतन्निदर्शनम्' इति धातुसूत्रस्य (१०।३२४) संख्या निर्दिष्टा । ७. अत्र लिबिशेनापरिज्ञाय न क्वापि सूत्रसंख्या निर्दिष्टा । अत्रैतत्पृष्ठस्था टि० ६ द्रष्टव्या ।

वुन् (द्र० ३।१।१४९) सरकः। सर्तेर्णिद् (दश० उ० ६।३०) इति थन्-सार्थः। सरतेरसुन् (द्र० दश० उ० ९।५०१) अप्सु सृता अप्सरसः। हसृरुहियुषिभ्य इतिः (उ० १।९७)—सरित्। असुन् (दश० उ० ९।४९)—सरः। अर्तिसृधृधमि (उ० २।१०२) सरणिः। सर्तेरटिः[1] (उ० १।१३४) सरट्। शकादिभ्योऽटन् (उ० ४।८१) सरटः कृकलासः। सर्तेरयुः (उ० ३।२२)— ५ सरयुः, सरयूर्नदी। सर्तेरपः पुक् च (उ० ३।१४१) सर्षपः। अयडन् कुसृ (उ० १।१२६) इति सरण्डः। सर्तेरुर्क् च (द० उ० ३।४२) इतीकक्—सृणीका लाला। जनिदाच्युसृ (दश० उ० १०।१५) इति निक्[2]—सृणिरङ्कुशः। सर्तेर्णित् (दश० उ० १।४३) सारथिः। ह्वादौ ऋ सृ गतौ (३।१७) सिसर्ति। चुरादौ (१०।२९१ दुर्गमते) सारयति। युच् (द्र० ३।३। १० १०७) सारणा तन्त्रीयोजना। ल्युट् (द्र० ३।३।११७) सारणी सेककुल्या ॥९१२॥

९६८. ऋ गतिप्रापणयोः। ऋच्छादेशः (द्र० ७।३।७८) ऋच्छति। समो गम्यृच्छिप्रच्छिस्वरत्यर्ति (१।३।२९ काशिका) इत्यात्मनेपदम्-समृच्छते। गुणोऽर्तिसंयोगाद्योः(७।४।२९)अर्यते। सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनाम् १५ (३।१।२२ वा०)यङ्-अरार्यते। उपसर्गादृति धातौ(६।१।९१)वृद्धिः-उपार्च्छति। थलि—इडत्यर्तिव्ययतीनाम् (७।२।६६) आरिथ। सर्तिशास्त्यर्तिभ्यश्च (३।१।५६) इत्यङ्—आरत्। स्मिपूङ्रञ्ज्वशां सनि (७।२।७४) इतीट्—अरिरिषति। अर्तिह्रीव्लीरी (७।३।३६) इति पुक्—अर्पयति, अर्पितः। अर्यः स्वामिवैश्ययोः (३।१।१०३), आर्योऽन्यः। अचि (द्र० ३।१।१३४) अरा। भिदादौ २५ (गण० ३।३।१०४) आरा शस्त्र्याम्। ऋणमाधमर्ण्ये (८।२।६०),अन्यत्र ऋतम्। अर्तिलूधूसूखन (३।२।१८४) इतीत्रः—अरित्रं केनिपातकः (अमरकोष १।१०।१३) अर्तेश्चतुः (उ० १।७२) किच्च—ऋतुः। अर्तेः किदिच्च (उ० २।५१) इतीनच्—इरिणं निस्तृणं स्थलम्। अर्तिसृधृ (उ० २।१०२) इत्यरणिः। अर्तिपृवपि (उ० २।११७) इत्युस्—अरुर्मर्म। अर्तेश्च (उ० ३।६०) इत्युनन्- २५ अरुणः। अर्तेर्नित् (दश० उ० ८।६) इत्यन्यच्—अरण्यम्। अर्तिकमिभ्रमि (उ० ३।१३२) इत्यरन्-अररं कपाटम्। उणादौ—अच इः (४।१३९)

---

१. '०रडिः' पाठा०।

२. पञ्चपाद्यां (४।१०४) क्निन्प्रत्ययः, दशपाद्यां तु निक्।

अरिः[1] । अर्तिगृभ्यां भन् (तु० उ० ३।१५२)—अर्भः, अर्भकः । अर्तेश्च (उ० ५।७) इत्यरतिः । अरत्निः (द्र० उ० ४।२) । अर्तेर्भुविणक् (तु० दश० उ० ६।८२)—ऋभुक्षा इन्द्रः । अर्तेः क्युज् उच्च (तु० उ० ५।१७) उरणो मेषः । अर्तेरू च (उ० ४।४६ श्वेत०) इति मिः—ऊर्मिः । स्नामदिपद्यर्तिपृशकिभ्यो वनिप् (उ० ४।११३) अर्वा—अश्वः । उषिकुषिगर्तिभ्य स्थन् (उ० २।४)—अर्थः । अर्तेरुच्च (उ० ४।१९५) इत्यसुन्—उरो वक्षः । अर्तेर्ण्याधौ शुट् च (तु० उ० ४।१९६) इत्यसुन्—अर्शः । उदके नुट् च (उ० ४।१९७) अर्णः । अर्तिस्तुसुहु (तु० उ० १।१४०) इति मन्—अर्मोऽक्षिरोगः । आरूः पिङ्गलः (द्र० उ० १।८५) । अर्यमन् (द्र० उ० १।१५९) । निर्ऋतिः । अररुर्मर्कटः । १० ह्वादौ ऋ सृ गतौ (३।१७) इयर्ति ॥९१३॥

६६९. गृ घृ सेचने । गरति । घरति । अमुं[2] नियतविषयमाहुः[3] । अग्निघृसिभ्यः क्तः (उ० ३।८६) घृतम् । घृणा । चुरादौ घृ स्रावणे (१०।१००) तङानी—अभिघारयते । ह्वादौ घृ क्षरणदीप्त्योः (३।१५) जिघर्त्ति । घर्मः । घृणिः ॥९१४,९१५॥

६७०. ध्वृ हूर्छने । हूर्छनं कौटिल्यम् । छन्दसि निष्टर्क्यदेवहूय (३।१।१२३) इति ध्वर्यः । न ध्वरोऽध्वरो यज्ञः ॥९१६॥

६७१. श्रु श्रु गतौ[4] । शवति । शुङ्गा प्ररोहः । श्रुवः शृ च (३।१।७) इति श्नुः—आश्रृणोति[5] चैत्राय, प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता (१।४।४०)

---

१. 'अररिः' 'आररिः' पाठा० । २. 'अमुं' इति युक्तः पाठः ।

३. तुलना कार्या—घरतिरस्माद्यविशेषेणोपदिष्टः । स घृतं घृणा घर्म इत्येवं विषयः (महा० ७।१।६५, ६६) इति पतञ्जलिवचनं तु लोकविषयकम्, वेदे तिङन्तान्यपि दृश्यन्ते । अत्र 'अथापि नैगमेभ्यो भाषिकाः—उष्णम्, घृतम् (२।१।२) इति निरुक्तवचनमप्यनुसन्धेयम् ।

४. स्मृतोऽयं पाठः पुरुषकारे (पृष्ठ ३१) । सायणादयो नेमौ पठतः । अत्र बहवः पाठभेदा दृश्यन्ते तत्तद्ग्रन्थेषु ।

५. यदि 'श्रु' धातोः भ्वादिपाठे सत्यपि 'श्रुवः शृ च' इत्यनेन नित्यं श्नुविकरणः स्यात् तर्ह्यस्य भ्वादिपाठोऽनर्थकः स्यात्, तथा सति स्वादावेवेमं पठेत्, सत्यप्येवं यदयमाचार्यः श्रुधातुं भ्वादौ पठति, श्नुप्रत्ययं च विदधाति, तेन न नित्यः

सम्प्रदानम् । समो गम्यृच्छि (१।३।२९ का०) इति तङ्—संश्रृणुते । श्र्युकः किति (७।२।११) इति नेट्—शुश्रोथ । भाषायां सदवसश्रुवः (३।२।१०८) क्वसुः—शुश्रुवान् । ज्ञाश्रुस्मृदृशां सनः (१।३।५७) आत्मनेपदम्—शुश्रूषते । प्रत्याङ्भ्यां श्रुवः (१।३।५९) नास्ति—प्रतिशुश्रूषति । वौ क्षुश्रुवः (३।३।२५) घञ्—विश्रावः । स्रवतिशृणोतिद्रवति (७।४।८१) इत्योरित्त्वं वा—शिश्रावयिषति, शुश्रावयिषति; अशिश्रवत्, अशुश्रवत् । ग्रहादौ (द्र० ३।१।१३४) श्रावी, श्रवीत्येके । हुयामाश्रुभसिभ्यस्त्रन् (उ० ४।१६८)—श्रोत्रम् । उणादौ श्रवणोऽश्वत्थः[1] । ल्युट् (द्र० ३।३।११७) श्रवणं कर्णः । असुन् (द० उ० ९।४९) श्रवः । वहिश्रियुद्रुग्लाहात्वरिभ्यो नित् (तु० उ० ४।५१) इति निः—श्रोणिः ॥९१७,९१८॥

६७२. षु प्रसवैश्वर्ययोः । सवति । सोता । [कर्मणि–] सुषुवे । सुतः । सवनः । सवः[2] । अदादौ (२।३३) सौति । स्वादौ षुञ् अभिषवे (५।१)—सुनोति ॥९१९॥

६७३. स्रु गतौ[3] । स्रवति । स्रवतिशृणोतिद्रवति (७।४।८१) रित्योरित्त्वं वा—सिस्रावयिषति, सुस्रावयिषति; असिस्रवत् असुस्रवत् । णिश्रिद्रुस्रुभ्यः कर्तरि चङ् (३।१।४८) असुस्रुवत् । क्विब्वचि प्रच्छि (उ० २।५७) इति स्रूः कामरूपी[4] । स्रुवः स्रुवः कः[5] (उ० २।६१) अपादाने । चिक् च (उ० २।६२) स्रुक् । स्रुरीभ्यां तुट् च (उ० ४।२०२) इत्यसुन्—स्रोतः । अस्यतेः

श्नुविकरण इति ज्ञापयति । तथा सति 'श्रवति' इत्यादयोऽपि भौवादिकाः प्रयोगाः द्रष्टव्याः । (ऋग्वेदे शब्विकरणो बहुत्र श्रूयते) । काशकृत्स्नीयकन्नडटीकायां 'श्रवति' इत्येव उदाह्रियते (पृष्ठ ७५) । तेन श्रवति शृणोति च स्वतन्त्रौ धातू । अत्र कृञ् करणे (१।६३६) धातोष्टिप्पणी द्रष्टव्या (पृ० १३०।३) ।

१. उज्ज्वलदत्तस्तु 'बहुलमन्यत्रापि' (उ० २।७८) इत्यत्र 'श्रवणा नक्षत्रम्' इत्याह । २. 'स्नानकालायतश्च सवः' पाठा० ।

३. 'स्वामी तालव्यादिममुं पपाठ श्रु श्रवणे इति' धातुवृत्तिः (पृ० १८१) । क्षीरतरङ्गिण्यां तु नैतादृशः पाठ उपलभ्यते । ४. 'कामरूपः' पाठा० ।

५. 'स्रुवकः' इति मूल पाठः, स चाशुद्धः । लिलिशेन नायं शोधितः । क्वचित् 'स्रुवकः' इति नास्ति ।

(४।१०४) अस्नुः (द्र० उ० ४।१०२)। सुयजीषिस्तुभ्यः करणे क्तिन् (३।३।९५ वा०) स्तुतिः। प्रे द्रुस्तुस्रुवः (३।३।२७) घञ्—प्रस्तावः ॥९२०॥

६७४. ध्रु स्थैर्ये। ध्रवति। बाहुलकात् (द्र० ३।३।१) कः (द्र० उ० २।६१) ध्रुवः। तुदादौ (६।९८) ध्रुवति ॥९२१॥

६७५. दु द्रु गतौ। दवति। दुन्योरनुपसर्गे (३।१।१४२) णः—दावो वनाग्निः। ऋदोरप् (३।३।५७) दवः। समि युद्रुदुवः (३।३।२३) घञ्—संदावः। दुतनिभ्यां दीर्घश्च (उ० ३।९०) दूतः। द्रवति। द्रवः। द्रुतः। बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः (१।३।८६) इति णेः परस्मैपदम्—द्रावयति। कसृभृवृ (७।२।१३) इति नेट्—दुद्रोथ। णिश्रिद्रुस्रुभ्यः कर्तरि चङ् (३।१।४८)—अदुद्रुवत्। स्रवतिशृणोति (७।४।८१) इत्यभ्यासस्य ओरित्त्वम्—दिद्रावयिषति, दुद्रावयिषति; अदिद्रवत्, अदुद्रवत्। प्रे द्रुस्तु (३।३।२७) इति प्रद्रावः। समि युद्रु (३।३।२३) इति सन्द्रावः। उदि श्रयति (३।३।४९) इत्युद्द्रावः। प्रे लपसृद्रुमथ (३।२।१४५) इति प्रद्रावी। द्रुप्रकरणे (३।२।१८० वा०) मितद्रुः। द्रुस्तरुः। द्रुमः। हरिमितयोर्द्रुवः (उ० १।३५) हरिद्रुः। द्रुदक्षिभ्यामिनन् (उ० २।५०)—द्रविणम्। कृवृजृसि (दश० उ० ५।४२) इति नः—द्रोणः। वहिश्रि (उ० ४।५१) इति निः—द्रोणिः। कृदिकारात् (गण ४।१।४५ सूत्रम्) इति ङीपि द्रोणी ॥९२२,९२३॥

६७६. जि जृ अभिभवे[1]। जयति। विपराभ्यां जेः (१।३।१९) आत्मनेपदम्—विजयते शत्रुम्। पराजेरसोढः (१।४।२६) इत्यपादानम्—अध्ययनात् पराजयते, अध्येतुं ग्लायतीत्यर्थः। सन्लिटोर्जेः (७।३।५७) कुत्वम्—जिगीषति, जिगाय। क्रीङ्जीनां णौ (६।१।४८) आत्वं—जापयति क्षय्यजय्यौ शक्यार्थे (६।१।८१)। विपूयविनीय (३।१।११७) इति जित्यो हलिः। संज्ञायां (३।२।४६) धनञ्जयः। अभिजित् (द्र० ३।२।६१)। ग्लाजिस्थश्च क्स्नुः[2] (३।२।१३९) जिष्णुः। इण्नशजि (३।२।१६३) इति क्वरप्—जित्वरः। कृवापाजि (उ० १।१) इत्युण्—जायुरौषधम्। तॄभूवहिवसि (उ० ३।१२८) इति झच्—जयन्तः। ल्युट् (द्र० ३।३।११७) उज्जयनी। जेर्मुट् चोदात्तः (उ०

---

१. पुरुषकारे (पृष्ठ २५) 'जिञि अभिभवे' इति मुद्रितपाठो दृश्यते, स चिन्त्यः।

२. 'ग्स्नुः' पाठा०।

३।६१)—जीमूतः। जरति। ज्रि इति दुर्गः—ज्रयति ॥९२४,९२५॥

६७७. क्षि ऐश्वर्यं इत्येके। क्षयति। ऋभुं क्षयति ईष्टे-ऋभुक्षा[1]।

[अथात्मनेपदिनः]

६७८. स्मिङ् ईषद्धसने। स्मयते, विस्मयते। स्मिपूङ्रञ्ज्व (७।२।७४) इतीट्—विसिस्मयिषते, स्तौतिण्योरेव षणि (८।३।६१) इति नियमात् षत्वाभावः। भीस्म्योर्हेतुभये (१।३।६८) तङ्, नित्यं स्मयतेः (६।१।५७) णावात्त्वम्—मुण्डो विस्मापयते[2]। नमिकम्पि (३।२।१६७) इति रः—स्मेरं हास्यम् ॥९२७॥ ५

६७९. गुङ् अव्यक्ते शब्दे। गवते। गोता। गोत्रम्। गू पुरीषोत्सर्गे इत्येके—गवति, गविता। तुदादौ (६।९७) गुवति,गुविता ॥९२८॥ १०

६८०. गाङ् गतौ। एकद्विबहुत्वे—गाते, गाते, गाते। इणो गा लुङि (२।४।४५) अगात। इह गै शब्दे (१।६५२) गायति ॥९२९॥

६८१. घुङ् कुङ् उङ् शब्दे। घवते। कवते। न कवतेर्यङि (७।४।६३) कुत्वम्—कोकूयते। यङ्लुकि नास्ति—न लुमताङ्गस्य (१।१।६३) इति[3]—चोक्‍ोति। कुसुयुभ्यो दीर्घश्च (तु० दश० उ० ७।५) इति पः—कूपः। कुवः क्‍रन् (उ० ३।१३३) कुररः। कुवश्चट् दीर्घश्च (उ० ४।९१)—कूचः, कूची[4]। अच इः (उ० ४।१३९)—कविः। अदादौ कु शब्दे (२।३४) कौति। तुदादौ (६।१००) कुवति। अवते। लुङि—औष्ट। इः (द्र० उ० ४।१३८)—अविः। ङुङ् इति च दुर्गः—ङवते। ञुङुवे। खुङ् चेत्येके ॥९३०-९३२॥ १५ २०

६८२. च्युङ् छ्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ। च्यवते। स्रवतिशृणोति (७।४।८१) इति वाभ्यासस्योत इः—चिच्यावयिषति, चुच्यावयिषति; अचिच्यवत्, अचुच्यवत्। च्युतः। च्यवनः। छ्यवते। ज्यवते। जुङ्

---

१. उद्धृतमिदं किञ्चित् पाठान्तरेण पुरुषकारे (पृष्ठ २३)।

२. इतोऽग्रे 'करणात् स्मये नास्ति—कुञ्चिकयैनं विस्मापयति' इत्यधिकं क्वचित्। २५

३. शितपा निर्देशात् कुत्वं न भवतीति भावः।

४. इतोऽग्रे 'कूर्चः, कूर्चिका किलादभेदः' इत्यधिकं क्वचित्।

इति नन्दी—जवते । जुचङ्क्रम्य (३।२।१५०) इति युच्—जवनः । वृत्तिकृत् तु जुं सौत्रमाह—जवः, प्रजवी । जोरी च (उ० २।२३) जीरम् । ऊतियूतिजूति (३।३।९७) इति जूतिः—क्विब्वचि ( उ० २।५७ ) इति जूः पिशाचः[1] । प्रवते । कटप्रूर्नदीतारः[2] । पिप्रावयिषति, पुप्रावयिषति; अपिप्रवत्, ५ अपुप्रवत् । बुधयुधनश (१।३।८६) इति ण्यन्तात् परस्मैपदम्—प्रावयति । प्रवणः । प्रुसृल्वः समभिहारे वुन् (३।१।१४९) प्रवकः । प्रोथोऽश्वघोणाग्रम्[3] । प्लुङोऽप्येवम् । भव्यगेय ( ३।४।६८ ) इत्याप्लाव्यश्चैत्रो नद्याः । पचादौ (द्र० ३।१।१३४) प्लवट्[4] । विभाषाङि रुप्लुवोः (३।३।५०) घञ्—आप्लावः, आप्लवः ॥९३३-९३७॥

१० ६८३. रुङ् गतिरेषणयोः । रेषणं हिंसाशब्दः । रवते[5] । आरावः आरवः (द्र० ३।३।५०) । सुयुरुवृञो युच् ( उ० २।७४ ) रवणः । रुशातिभ्यां क्रुन् (उ० ४।११२ श्वेत०) रुरुः । अच इः (उ० ४।१३९) रविः । अदादौ रु शब्दे (२।२५) रौति ॥९३८॥

६८४. धृङ् अवध्वंसने[6] । धरते । तुदादौ धृङ् आधारे[7] १५ ( ६ । ११४ )—ध्रियते । चुरादौ धृ धारणे[8] धारयति । अनुपसर्गाल्लिम्पविन्द (३।१।१३८) इति शः—धारयः । संज्ञायां (३।२।४६) वसुन्धरा । इङ्धार्योः शत्रकृच्छ्रिणि (३।२।१३०)—धारयन् । अर्तिस्तुसु (उ० १।१३९) इति मन्—धर्मः । अर्तिसृधृधमि (उ० २।१०२) इत्यनिः—धरणि, धरणी । अचि (द्र० ३।१२४) धरोऽद्रिः, धरा भूः । भिदादौ २० (द्र० गण० ३।३।१०४) धारा । अध्यायन्याय (उ० ३।३।१२२ काशिका) इत्याधारः ॥९३९॥

---

१. द्र० दशपादी-उणादिवृत्ति १०।२ (पृ० ४२४) ।
२. 'नदीमारः' पाठा० ।
३. 'अश्वमुखाग्रम्' पाठा० । उणादौ २।१२ प्रोथो निपात्यते ।
२५ ४. 'प्लवः' पाठा० । टित्त्वान्ङीप्—प्लवी । ५. उद्धृतं पुरुषकारे (पृष्ठ ३२) ।
६. 'अविध्वसंने इति क्षीरस्वामी' इति पुरुषकारे (पृष्ठ ३७) पाठः ।
७. तुदादौ 'स्थाने' इति पठिष्यति क्षीरस्वामी ।
८. चुरादौ नायमुपलभ्यते । न च तुदादौ चौरादिकं निर्देक्ष्यति क्षीरस्वामी ।

६८५. मेङ् प्रणिदाने[1] । प्रणिदानं[2] प्रत्यर्पणम् । अपमयते, प्रणिमयते । सनि मीमाघु (७।४।२४) इति मित्सते । ह्वावामश्च (३।२।२) इत्यण्—धान्यमायः । उदीचां माङो व्यतिहारे (तु० ३।४।१९) क्त्वा—अपमित्य याचते, याचित्वा अपमयते, मयतेरिदन्यतरस्याम् (६।४।७०),पक्षे अपमाय । मापोरुरी च (दश० उ० १।१५७) मेरुः, सुमेरुः । माछाससिसूभ्यो यः (तु० उ० ४।१०६) माया । चन्द्रे मो ङित्[3] (तु० ४।२२८)इत्यसुन्—चन्द्रमाः । अदादौ मा माने (२।५४) माति । ह्वादौ माङ् माने (३।६) ममीते ॥९४०॥ ५

६८६. देङ्[4] रक्षणे । दयते । दयतेर्दिगि लिटि (७।४।९)—अवदिग्ये । मनिन् (दश० उ० ६।७३) दामा । दाण् दाने (१।६६२) यच्छति । दैप् शोधने (१।६५६) दायति मुखम् । अदादौ दाप् लवने (२।५१) दाति व्रीहीन् । ह्वादौ डुदाञ् दाने (३।६) दत्ते, ददाति । दिवादौ दो अवखण्डने (४।३९) द्यति ॥९४१॥ १०

६८७. श्यैङ् गतौ । श्यायते । श्याद्व्यध (३।१।१४१) इति णः, श्याग्रहणं सोपसर्गार्थम्—प्रतिश्यायः, अवश्यायः । द्रवमूर्तिस्पर्शयोः श्यः (६।१।२४) सम्प्रसारणम्—शीनं घृतम्, श्योऽस्पर्शे (८।४।४७) नत्वम्,नेह—शीतो वायुः । प्रतेश्च(६।१।२५) स्फैयकृतस्य पिता प्रतिशीनः । विभाषाऽभ्यवपूर्वस्य (६।१।२६) अभिशीनः, अभिश्यानः; अवशीनः, अवश्यानः । इषियुधि (उ० १।१४५) इति मक्—श्यामः, श्यामा, श्यामाकः । श्यास्त्याहृञ् (उ० २।४६) इतीनच्—श्येनः । हृश्याभ्यामितन् (उ० ३।९३) श्येतः ॥९४२॥ १५ २०

---

स्मृतोऽयं पाठः पुरुषकारे (पृष्ठ ३७) । सायणस्तु स्मृत्वा प्रत्याख्यातवान् (धातु० पृष्ठ १६३) ।

१. 'प्रतिदाने' इति काशकृत्स्नः (पृष्ठ १२८) । तथैव कातन्त्रे (हस्तलेख पृ० ८) चान्द्रे १।४८० च । 'प्रणिधाने' पाठा० । २. 'प्रणिधानम्' पाठा० ।

३. 'ङित्' इति प्रायेणोणादौ पाठः । श्वेतवनवासिवृत्तौ क्वचिद् हस्तलेखे 'चन्द्रे मो ङित्' इत्येव उपलभ्यते । अपरस्मिन् 'चन्द्रे मो डिनिच' इत्येवं पाठान्तरं दृश्यते (द्र० उ० वृ० पृष्ठ २०६) । २५

४. 'दैङ् त्रैङ् पालने । दायते, त्रायते' इति काशकृत्स्नधातुपाठस्य कन्नडटीकायाम् )पृष्ठ १२८) । तथैव कातन्त्रीयधातुपाठेऽपि (अस्मद्धस्तलेख पृष्ठ ८) ।

**६८८. प्यैङ् वृद्धौ ।** आप्यायते । छित्वरादौ (द्र० उ० ३।१) पीवरः । ध्याप्योः सम्प्रसारणं च (उ० ४।११५) इति क्वनिप्—पीवा ॥९४३॥

**६८९. त्रैङ् पालने ।** चौरात् त्रायते (द्र० १।४।२५) । नुदविदोन्दत्रा (८।२।५६) इति नत्वं वा—त्राणः, त्रातः । नित्यम्—

देवत्रातो गलो ग्राह इतियोगे च सद्विधिः ।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः । [महाभाष्य ७।४।४१]॥९४४॥

**६९०. अनुदात्ताः ॥**

**६९१. पूङ् पवने ।** पवनं नीरजीकरणम् । इतश्चत्वारः सेटः । पवते । पविता । स्मिपूङ्रञ्ज्वशां सनि (७।२।७४) इतीट्, ओः पुयण्ज्यपरे (७।४।८०) इत्योरभ्यासस्येत्—पिपविषते । विपूयविनीय (३।१।११७) इति विपूयो मुञ्जे साधुः । न भाभूपूकमि (८।४।३४) इति कृति णत्वं नास्ति—प्रपवनीयम् । पूङः क्त्वा च (१।२।२२) इति क्त्वानिष्ठयोर्वेट्—पूतः, पवितः; पूत्वा, पवित्वा । पूङ्यजोः शानन् (३।२।१२८) पवमानः । ल्युः (द्र० ३।१।१३४) पवनः । निरभ्योः पूल्वोः (३।३।२८) निष्पावः । हलसूकरयोः पुवः । (३।२।१८३) त्रन्—पोत्रम् । कर्तरि चर्षिदेवतयोः (३।२।१८६) इत्रन्—पवित्रम् । नप्तृनेष्टृत्वष्ट (उ० २।९५) इति पोता ऋत्विक् । हसिमृग्रिण्वामि (उ० ३।८६) इति तन्—पोतः शावको, नौभेदश्च । छापूङ्खडिभ्यो गक् (तु० उ० १।१२४) पूगः क्रमुकः, संघः । पुवो ह्रस्वश्च (उ० ४।१६५) इति क्त्रः—पुत्रः । पूञो यण् णुग्ह्रस्वश्च (दश० उ० ८।१६ कपाठः)—पुण्यम् । इः (तु० ४।१३८) पविः । क्र्यादौ पूञ् (९।१२) पुनीते, पुनाति ॥९४५॥

**६९२. मूङ् बन्धने ।** मवते । ओः पुयण्ज्यपरे (७।४।८०) मिमावयिषति । मूङ्योर्लोपश्च (तु० दश० उ० ६।१७)[1] इत्युषन्—तैजसावर्तनी मूषा (अमर० २।१०।३३) । तनिमूङ्भ्यां किच्च (दश० उ० ६।८)—मूतः पुटग्रन्थः । जीवनस्य मूतः—जीमूतः, पृषोदरादिः (द्र० ६।३।१०९) ॥

---

१. सूत्रमिदं दशपाद्यामेवोपलभ्यते । तत्र 'मूङ्ग्व्योर्लोपश्च' इति पाठः । स एव च शुद्ध पाठः । क्षीरस्वामी दशपादीपाठं प्रायेणानुसरति । तत्रापि च कसंज्ञकहस्तलेखस्थं पाठम् । अत्र क्षी० त० २।६ यूष-पद-सिद्धिर्द्रष्टव्या ।

६९३. डीङ् विहायसां[1] गतौ। डयते। इण् निष्ठायाम्—डयितः, क्त्वि त्वं नेष्टम्। दिवादौ डीङ् गतौ (४।२५) डीयते, डीनः ॥९४७॥

[अथ सेट् परस्मैपदी]

६९४. तॄ प्लवनतरणयोः। प्लवनं मज्जनम्, तरणं लङ्घनम्। तरति। तारकः। वृतो वा (७।२।३८) इतीटोऽलिटि वा दीर्घः—तरिता, तरीता; तेरिथ। न लिङि (७।२।३९) तरिषीष्ट त्वया। सिचि परस्मैपदेषु (तु० ७।२।४०) न दीर्घः—अतारिष्टाम्। इट् सनि वा (७।२।४१) तितीर्षति, तितरिषति, तितरीषति, तॄफलभज (६।४।१२२) इत्येत्वाभ्यासलोपौ—तेरुः। संज्ञायां भृतॄ (३।२।४६) इति खच्—रथन्तरं साम। अवेतॄस्त्रोर्घञ् (३।३।१२०) अवतारः। भिदादौ (गण० ३।३।१०४) तारा। ण्यन्तादचि (द्र० ३।१।१३४) तारो गुणः। रदाभ्यां निष्ठातो नः(८।४।४२) तीर्णः। ऋकारल्वादिभ्यः क्तिन्निष्ठावत् (३।३।९४ काशिका) तीर्णिः। पातॄतुदिवचि (उ० २।७) इति थक्—तीर्थम्। अर्तिसृधृ (उ० २।१०२) इति तरणिः। वृकृतॄ (तु० उ० ३।५३) इत्युनन्—तरुणः। त्रोरश्चलः (उ० १।५) तालु। वृतॄवदि (तु० उ० ३। ६२) इति सः—तर्षः। कॄतॄकृपिभ्यः कीटन् (उ० ४।१८५) तिरीटं शिरोऽलङ्कारः। अवितॄस्तृ (तु० ३।१५८) इतीः—तरीः। असुन् (दश० उ० ९।४९) तरस्। भृमृशीतॄ (तु० उ० १।७) इत्युः—तरुः। अण्डन् (१।१२६) इति प्राक्प्रत्ययात्[2] तरण्डः प्लवविशेषः। त्रादिभ्यश्च (दश० उ० ३।६०) इत्यङ्गच्—तरङ्गो वीचिः। पार तीर (१०।२९२) इत्यस्मात् तीरम् ॥९४०॥

६९५. उदात्ताः ॥

[अथानिट आत्मनेपदिनः]

६९६. गुप गोपने। इतो हृदान्ताः (१।७०३) अष्टावनिट आत्मनेपदिनश्च। गुप्तिज्किद्भ्यः सन् (३।१।५)—जुगुप्सते पापात्। निन्दायामुत्पत्तिचिकीर्षितम्, अन्यत्र—गोपते[3]। गुपू रक्षणे (१।२८०)—

१. 'विहायसि' पाठा०।

२. तुलनीयम्—प्रकिप्रत्ययनिर्देशः शरण्डादीनां प्रसिद्ध्यर्थः (दश० उ० वृ० ५।६)। ३. गोपते इति प्रयुक्तः सायणेन (धातु० पृष्ठ १८८)।

गोपायति, आयप्रत्ययः (द्र० ३।१।२८)। चुरादौ भासार्थः (१०।१९७) गोपायति ॥९४९॥

६९७. तिज निशाने क्षमायाञ्च। निशानं तीक्ष्णीकरणम्। तितिक्षते कोपम्। क्षमायामुत्पत्तौ सन्विधेः (द्र० ३।१।५) निशाने प्रत्ययान्तरं ज्ञाप्यते—तेजते[1]। तेजः। तेजनम्। तेजनी। युजिरुचितिजां कुश्च (उ० १।१४६) इति मक्—तिग्मम्। तिजेर्दीर्घश्च (उ० ३।१८) इति स्नः[2]—तीक्ष्णः। चुरादौ (१०।१०२) उत्तेजयति ॥९५०॥

६९८. मान पूजायाम्। मान्बधदान्शान्भ्यः (३।१।६) इत्युत्पत्तौ विचारे सन्—मीमांसते। मीमांसा विचारणा। चुरादौ (१०।२३०) आधृषाद् वा (१०।२०१) इति मानयति, मानति। मानः। माननम्। नप्तृनेष्टृ (उ०।२।९६) इति माता ॥९५१॥

६९९. बध बन्धने। मान्बध (३।१।६) इति जुगुप्सायां सन्—बीभत्सते। अन्यत्र—बाधते। बधकः चुरादौ बध संयमने (१०।१४) बाधयति ॥९५२॥

७००. रभ राभस्ये। राभस्यं कार्योपक्रमः। संरभते, आरभते। सनि मीमाघु (७।४।५४) इतीण्—आरिप्सते। पोरदुपधात् (३।१।९८) यत्—आरभ्यम्। रभेरशब्लिटोः (७।१।६३) नुम्—आरम्भः, आरम्भणम्। अच् (द्र० ३।१।१३४ वा०)—रम्भः, रम्भा। शकधृषज्ञा (३।४।६५) इति तुमुन्—आरभते भोक्तुम्। अत्यविचमि (उ० ३।११७) इत्यसच्—रभसो निर्विचारा प्रवृत्तिः ॥९५३॥

७०१. डुलभष् प्राप्तौ। लभते। लब्धिमम् (द्र० ३।३।८८; ४।४।२०)। उपलम्भा (द्र० ३।३।१०४)। बाहुलकात्[3] लब्धिः[4]। लभेश्च

---

१. 'तेजते' प्रत्युक्तः सायणेन (धा० पृ० १८८) २. 'क्स्नः' इति युक्तः पाठः। ३. अत्र लिबिशेन भ्रान्त्या 'बहुलमेतन्निदर्शनम्' (१०।३२४) इत्यस्य संख्या निर्दिष्टा। अत्र पूर्वत्र (पृष्ठ १३१) निर्दिष्टा टिप्पणी (३) द्रष्टव्या।

४. अत्रापि लिबिशेन भ्रान्त्या काशिकायाः ३।३।९३ संख्या निर्दिष्टा। काशिकाकारस्तु लब्धिपदं 'क्तिन्नाबादिभ्यः' इति वार्तिकेन साधयति, क्षीरस्वामी तु बहुलग्रहणात् क्तिनमाह।

(७।१।६४)इति नुम्—आलम्भः,विलम्भनम्[1] विभाषा चिण्णमुलोः(७।१।६९) अलाभि, अलम्भि, सोपसर्गान् नित्यमाहुः (द्र० ७।१।६९ काशिका०). व्यलम्भि; लाभंलाभम् । लम्भंलम्भम् उपसर्गात् खल्घञोः (७।१।६७) ईषल्लम्भः, सुप्रलम्भः । न सुदुर्भ्यां केवलाभ्याम् (७।१।६८) सुलभम्, दुर्लभम् । आङो यि (७।१।६५)—आलम्भ्यम् । उपात् प्रशंसायाम्(७।१।६६) उपलम्भ्यम् । ५
सनि मीमाघु (७।४।५४) इति लिप्सते । लभते भोक्तुम् (द्र० ३।४।६५) ॥

७०२. ष्वन्ज परिष्वङ्गे । दंशसन्जस्वन्जां शपि (तु० ६।४।२५) इति न लोपः, उपसर्गात् सुनोति (८।३।६५)इति षत्वम्—परिष्वजते । सदिस्वन्जोः परस्य लिटि(तु० ८।३।११८) इति षत्वं नास्ति, श्रन्थिग्रन्थिदम्भिस्वञ्जीनां च (द्र० १।२।६ का०) इति कित्त्वम् परिषस्वजे । प्राक् सितादड्व्यवायेऽपि(८।३।६३) १०
इति षत्वम्—पर्यष्वजत । सिवादीनां वाड्व्यवायेऽपि (८।३।७१) इति षत्वं वा—पर्यस्वजत । अस्वङ्क्थाः,इडपीष्टः[2]—अस्वङ्क्षिष्टाः। जान्तनशां विभाषा

१. वस्तुतः सानुषङ्गा 'आरम्भः, आरम्भणम्- आलम्भः, विलम्भनम्' इत्येवमादयः प्रयोगा न रभलभधात्वोः, किन्तर्हि सानुषङ्गयोर्धात्वन्तरयो रम्भलम्भयोः । अनयोः धात्वन्तरे किं मानमिति चेद् ब्रूमः, यत्रानयोर्नुम् विधीयते तत्र नुमाभावस्यापि प्रयोगदर्शनात् । तद्यथा— १५

(क) चरकसंहितायाम् (चिकित्सा १९।४) 'आदिकाले यज्ञेषु पशवः समालभनीया बभूवुः, नालम्भाय प्रक्रियन्ते स्म' इति वाक्ये लभलम्भयोः पृथक् पृथक् प्रयोग-दर्शनात्, अर्थान्तरश्रवणाच्च ।

(ख) काशिकायाम् (७।१।६५) उद्धृते 'अग्निष्टोम आलभ्यः' इति श्रौतवाक्ये प्राप्तोऽपि नुम् न श्रूयते । २०

(ग) काशकृत्स्नधातुपाठीयकन्नडटीकायां रभलभ धात्वोः'रभकः, रभः,रभमाणः, रभणीयम्, लभिः, लभनम्, लभकः, लभमानः, इत्यादिप्रयोगेषु नुमोऽदर्शनात् ।

तदेवं लभलम्भयोः पार्थक्येऽर्थान्तरे च सति 'ब्रह्मणे ब्राह्मणमालभते' (तै० ब्रा० ३।४।१—१८) इत्यादिषु आलभते इत्यस्य नालम्भनार्थः,अपि तु 'हृदयालभते (पार० गृह्य १।८) इत्यादिवत् स्पर्शार्थ एव । वस्तुतस्तु लाघवमिच्छद्भिः पाणिन्यादिभिराचार्यैरेकमेव धातुं पठित्वा द्विप्रकृतीनां शब्दानां साधुत्वमन्वाख्यातम् (अत्र निरुक्तस्य २।२ तथत्र स्वारादनन्तरान्तस्थान्तर्धातुर्भवतीत्यादिप्रकरणमनुसन्धेयम्) । २५

२. अनिट्त्वान्न प्राप्नोति ।

(६।४।३२) क्त्वि न लोपः—खङ्क्त्वा, खक्त्वा ॥९५५॥

७०३. हद पुरीषोत्सर्गे । हदते । हन्नम् । हन्ये पाने न गोमयमिति प्रमादात्[1] ॥९५६॥

७०४. अनुदात्ता अनुदात्तेतः ॥

५ ७०५. ञिक्ष्विदा अव्यक्ते शब्दे, ७०६. उदात्त उदात्तेत् । क्ष्वेदति । क्ष्वेदिता । आदितश्च (७।२।१६) इति नेट्—क्ष्विण्णः । विभाषा भावादिकर्मणोः (७।२।१७) क्ष्विण्णम्, क्ष्वेदितम्; प्रक्ष्विण्णः, प्रक्ष्वेदितः, निष्ठा शीङ्स्विदिक्ष्विदिधृषः (१।२।१९) इति सेटो निष्ठाया न कित्त्वम् । ञिक्ष्विदा (४।१३५) क्ष्विद्यति, अक्ष्विदत् ॥९५७॥

१० ७०७. स्कन्दिर् शोषणे । इतः क्तिपर्यन्ताः (१।७१९) पञ्चदशानिटः परस्मैपदिनश्च । स्कन्दति, स्कद्यते । परिस्कन्दः प्राच्यभरतेषु (८।३।७५) वा षत्वम्—परिष्कण्णः, परिस्कन्नः । वेः स्कन्देरनिष्ठायाम् (८।३।७३) वा षत्वम्—विष्कन्दति, विस्कन्दति; नेह—विस्कन्नः । परेश्च (८।३।७४) परिष्कन्दति, परिस्कन्दति । प्रास्कन्दत्, प्रास्कन्दीत् ।
१५ नीग्वञ्चु (७।४।८४) इति चनीस्कद्यते । स्कन्देः सलोपश्च (उ० १।१५) इत्युः—कन्दुः स्वेदनी । अचि (द्र० ३।१।१३४) स्कन्दः । स्कन्देश्च स्वाङ्गे (उ० ४।२०६) धः—स्कन्धः । क्त्वि स्कन्दिस्यन्दोः ( ६।४।३१ ) इति नलोपो नास्ति—स्कन्त्वा । विशिपतिपदिस्कन्दां (३।४।५६) णमुल्—गेहावस्कन्दमास्ते॥९५८॥

७०८. यभ विपरीतमैथुने । यभति । यब्धा । यभ्यम् । जभि
२० च इति दौर्गाः[2]—जम्भति ॥९५९॥

७०९. णम प्रह्वत्वे । प्रह्वत्वं नम्रत्वम् । प्रणमति । कर्मकर्तरि न दुहस्नुनमां यक्चिणौ ( ३ । १ । ८९ ) नमते दण्डः स्वयमेव, अनंस्त । यमरमनमातां सक् (तु० ७।२।७३) अनंसीत् । ज्वलह्वलह्मलचलनमाम् (१।५५५) इति वा मित्—नामयति, नमयति । उपसर्गात् नित्यम्—प्रणमयति । नमिकम्पि (३।२।१६७) इति रः—नम्रः । फलिपाटि (उ० १।१८) इति
२५ नाकुर्वल्मीकम् ॥९६०॥

---

१. कोऽभिप्रायः, कुत्रत्यश्च इति न ज्ञायते । 'हन्यमानः गायति प्रमादात्' पाठा० ।
२. काशकृत्स्नः 'जभि गर्वे' पठति (पृष्ठ ७७ ।

**७१०. गम्लृ सप्लृ गतौ ।** इषुगमियमां छः (७।३।७७) गच्छति । समो गम्यृच्छि (१।३।२९) इति तङ्—संगच्छते । आगमत् (द्र० ३।१।५५) गमहनजन (६।४।९८) इत्युपधालोपः—जग्मुः । विभाषा गमहन (७।२।६८) इति क्वसौ वेट्—जग्मिवान्, जगन्वान् । गमेरिट् परस्मैपदेषु (७।२।५८) गमिष्यति, जिगमिषति । वा गमः (१।२।१३) इति वा लिङ्सिचोः कित्त्वम्—संगसीष्ट, संगंसीष्ट; समगत, समगंस्त । अज्झनगमां सनि (६।४।१६) इतीणादेशस्य गमेर्दीर्घविधेः (द्र० काशिका ६।४।१६) अस्य नास्ति—संजिगंसते । गमश्च (३।२।४७) इति खच्—प्लवंगमः[1] । खच्च डित् (३।२।३८ वा०) प्लवंगः[1] । डः (द्र० ३।२।३८,४८ भाष्य) प्लवगः[1] । विहायसो विह च (३।२।३८ वा०) विहंगमः । डे च (३।२।३८ वा०) विहगः । विहंगः (द्र० ३।२।३८ वा०) । उरसो लोपश्च (३।२।४८ वा०) उरगः । उरंगमोऽपीति केचित् । त्वरस्य तुरादेशः—तुरंगमः । लषपत (३।२।१५४) इत्युकञ्—आगामुकः । गत्वरश्च (३।२।१६४) । सितनिगमि (उ० १।७०) इति तुन्—आगन्तुः । गन् गम्यद्यो: (दश०उ० ३।६२) गङ्गा । गमेर्डोः (उ०२।६७) गौः । वर्तमाने पृषत् (उ० २।८४) इति जगत् । नीलंगुः (द्र० उ० १।३७) क्रिमिः । गमेर्गश्च (उ० २।७७) इति क्युन्[2]—गगनम् । भविष्यति गम्यादयः (३।३।३), गमेरिनिः (उ० ४।६) गमी ग्रामम् । आङि णित् (उ० ४।७) आगामी । गमेरा च (उ० ४।१६६) इति त्रन्—यात्रम् । ग्रहवृदृनिश्चिगमश्च (३।३।५८) इत्यप्—गमः । गोचरसंचर (३।३।११९) इति निगमो वेदादिः । सर्पति, असृपत् । सर्पोऽचि । के (द्र० ३।१।१३५) सृपः । स्फायि (उ० २।१३) इति रक्—सृप्रश्चन्द्रमाः, सृप्रा नाडी । अर्चिशुचि (उ० २।१०८) इतीसि—सर्पिः ॥९६१,९६२॥

**७११. यम उपरमे ।** उपरमो निवृत्तिः । इषुगमियमां छः (७।३।७७) यच्छति । उपाद् यमः स्वकरणे (१।३।५६) तङ्—स्वकरणं परिणयः[3]—उपयच्छते कन्याम् । आङो यमहनः (१।३।२८) आयच्छते । समुदाङ्भ्यो यमोऽग्रन्थे (१।३।७५) संयच्छते । यमो गन्धने (१।२।१५) कित्त्वम्—

---

१. 'प्रवङ्गमः, प्रवङ्गः, प्रवगः' पाठा० ।

२. अनेन सूत्रेण युच् विधीयते, न क्युन् ।

३. भाष्यकारस्तु स्वकरणमात्र आह ।

उदायत। विभाषोपयमने (१।२।१६) उपायत, उपायंस्त। यमरमनमातां सुक्[1] च (तु० ७।२।७३) अयंसीत्। यंयम्यते (द्र० ७।४।८५)। गमोऽपरिवेषणे (१।५५९) मित्—नियमयति। वाचि यमो व्रते (३।२।४०) खच्, वाचंयमपुरन्दरौ (६।३।६६)। अच् (द्र० ३।१।१३४) यमः। नियतः। यतिः।
५ नियतिः। न पादमि (१।३।८९) इति तङ्—आयामयते। यमः समुपनिविषु च (३।३।६३) इति वा घञ्-संयमः, संयामः; उपयमः, उपयामः; नियमः, नियामः; वियमः, वियामः। ष्ट्रन् (द० उ० ८।७९) यन्त्रम्। उदिदिति श्रीभोजः[2]—यत्वा, यमित्वा ॥९६३॥

**७१२. तप संतापे।** तपति। निसस्तपतावनासेवने (८।३।१०२)
१० षत्वम्—निष्टपति। उद्विभ्यां तपः (१।३।२७) तङ्—उत्तपते, वितपते। स्वाङ्गकर्मकाच्च (१।३।२७ वा०) उत्तपते पृष्ठम्। तपस्तपः कर्मकस्यैव (३।१।८८) कर्तुः कर्मत्वम्—तप्यते तपस्तापसः, तपोऽर्जयतीत्यर्थः। तपोऽनुतापे च (३।१।६५) इति न यक्चिणौ—अतप्त तपस्तापसः, अन्ववातप्त पापेन कर्मणा। नन्द्यादौ (गण० ३।१।१३४) तपनः सूर्यः।
१५ असूर्यललाटयोर्दृशितपोः (३।२।३६) खश्—ललाटन्तपः। द्विषत्परयोस्तापे (३।२।३९) द्विषन्तपः, संज्ञायाम् (३।२।४६) परन्तपः[3]। असुन् (द० उ० ९।४९) तपः ॥९६४॥

**७१३. त्यज हानौ।** हानिस्त्यागः। त्यजति। त्याज्यम्—त्यजियज्योः कुत्वं नेष्टम्[4] ॥९६५॥

२० **७१४ षञ्ज सङ्गे।** दन्शसन्जस्वन्जां शपि (तु० ६।४।२५) नलोपः, उपसर्गात् सुनोति (८।३।६५) इति षत्वम्—व्यतिषजति। स्थादिष्वभ्यासे चाभ्यासस्य (८।३।६४) अभिषषञ्ज। जान्तनशां विभाषा (६।४।३२)

---

१. 'स्रक्' पाठा०। 'सक्' इति काशिका। २. द्र० पुरुषकारः, पृष्ठ १००।

३. परन्तपस्तु 'द्विषत्परयोस्तापे' (३।२।३९) इत्यनेनैव सिद्ध्यति। अत्र
२५ कश्चित् पाठभ्रंशो जातः। "द्विषन्तपः, परन्तपः। संज्ञायाम् (३।२।४६) शत्रुंतपः" इति युक्तः पाठः स्यात्।

४. यजेर्ण्यति कुत्वाभावः 'यजयाज' ७।३।६६ इत्यनेनैव सिद्धः, त्यजेश्च 'ण्यति प्रतिषेधे त्यजेरुपसंख्यनम्' इति तत्रस्थेनैव वार्तिकेन।

क्त्वि नलोपः—सक्त्वा, सङ्क्त्वा। उत्सङ्गोऽङ्कः। प्रासङ्गः। निषङ्गस्तूणी[1]। असिसञ्जिभ्यां क्थिन् (उ० ३।१५४) सक्थि ॥९६६॥

७१९ दृशिर् प्रेक्षणे। पाघ्राध्मा (७।३।७८) इति पश्यादेशः—पश्यति। समो गम्यृच्छि (१।३।२९) इत्यत्र[2] दृशेश्च (१।३।२९ काशिका) इति तङ्—संपश्यते। विभाषा सृजिदृशोः ७।२।६५) थलीट्—ददर्शिथ, दद्रष्ठ। सृजिदृशोर्झल्यमकिति (६।१।५८) इत्यमागमः—द्रष्टा। स्यसिच्सीयुट्तासिषु (६।४।६२) इति चिण्वदिट् च—दर्शिष्यते त्वया। इरितो वा (३।१।५७) इत्यङ्, ऋदृशोऽङि गुणः (७।४।१६)—अदर्शत, अद्राक्षीत्, न दृशः (३।१।४७) इति क्सो नास्ति। ज्ञाश्रुस्मृदृशां सनः (१।३।५७) तङ्—दिदृक्षते। चङि उर्ऋत् (७।४।४७) वा—अददर्शत्, अदीदृशत्। अभिवादिदृशोरात्मनेपदे (१।४।५३ वा०) वा कर्तुः कर्म संज्ञा—राजा दर्शयते भृत्यान्, भृत्यैर्वा। पाघ्राध्माधेड्दृशः शः (तु० ३।१।१३७) उत्पश्यः। असूर्यललाटयोर्दृशितपोः (३।२।३६) खश्—असूर्यम्पश्या राजदाराः। उग्रम्पश्येरम्मदपाणिन्धमाश्च (३।२।३७)। त्यदादिषु दृशोऽनालोचने कञ्च (३।२।६०) तादृक्, तादृशः। तादृक्षः (द्र० ३।२।६० काशिका)। समानान्ययोश्च (३।२।६० वा०) सदृशः, अन्यादृशः। दृशेः क्वनिप् (३।२।९४) पारदृश्वा। दर्शः, आदर्शः। अर्जिदृशिकम्यमि (उ० १।२७) इति पशुः। भाषायां शासियुधिदृशिधृषिमृषिभ्यो युच् (३।३।१३० वा०) सुदर्शनः। कर्मणि दृशिविदोः साकल्ये (३।४।२९) णमुल्—कन्यादर्शं वरयति ॥९६७॥

७२०. दन्श दशने। दशनं दन्तकर्म। दन्शसन्जस्वन्जां शपि (तु० ६।४।२५) इति नलोपः—दशति। लुपसद (३।१।२४) इति भावगर्हायां यङ्—जपजभदहदश (७।४।८६) इति अनुस्वारागमः—दन्दश्यते। यजजपदशां यङः—(३।२।१६६) इत्यूकः—दन्दशूकः। कर्मण्यण् (३।२।१) वृषदंशो मार्जारः। दशने (धातुसूत्र १।७१९) इति निर्देशात्[3] न लोपः। उपदंशस्तृतीयायाम् (३।४।४७) इति णमुल्—मूलकोपदंशं भुङ्क्ते। दाम्नी (३।२।१८२) इति ष्ट्रन्—दंष्ट्रा। तुदंशो गुणश्च (तु० उ०

१. तूणी इषुधिः। द्र० अमर २।८।८९।

२. 'इति वर्तमाने' पाठा०।

३. स्मृतं धातुवृत्तौ (पृष्ठ १९९)।

१।१४९ नारा०) दश । [1]षिद्भिदादिभ्योऽङ् (३।३।१०४) दशा वर्तिरवस्था च, दशा वस्त्रान्तावयवाः ॥९६८॥

७१७. कृष विलेखने । विलेखनं हलोत्किरणम् । कर्षति । तुदादौ (६।६) कृषति । स्पृशमृषकृषतृपदृपां सिज्वा (३।१।४४ वा०) अक्राक्षीत्, अकार्क्षीत्; पक्षे क्सः अकृक्षत् । उर्ऋद् (७।४।७) वा—अचकर्षत् अचीकृषत् । नन्द्यादौ (गण ३।१।१३४) संकर्षणः । अचि(द्र० ३।१।१३४) कर्षः, आकर्षो द्यूतफलकम् । सप्तम्यां चोपपीडरुधकर्षः (३।४।४९) भ्राष्ट्रोपकर्षं धानाः खादति । कृषिचमितनि (उ० १।८०) इत्यूः—कर्षूः । इक् कृष्यादिभ्यः (३।३।१०८ वा०) कृषिः । कृषेर्वृद्धिश्चोदीचाम् (उ० २।३८) कर्षकः कार्षकः । ग्रश्चिकृषोः किकन् (द० उ० ३।१२) कृषिकः । कृषेरादेश्च चः (द० उ० १।४) चर्षणिर्वैश्या[2] । कृषेर्वर्णे (उ० ३।४) नक्—कृष्णः ॥९६९॥

७१८. दह भस्मीकरणे । दहति । लुपसदचर (३।१।२४) इति यङ्—दन्दह्यते । दादेर्घः[3] (कातन्त्र ३।८।५७) दग्धा, धक्ष्यति (द्र० ८। २।३७) न्यङ्क्वादौ (गण० ७ ३ ५३) दाघः, निदाघः, अवदाघो भक्ष्ये[4] । अवदाहोऽन्यः ॥९७०॥

७१९. मिह सेचने । मेहति । मेहनम् । क्वसि मीढ्वान् (द्र० ६।१।१२) दाम्नी (३।२।१८२) इति ष्ट्रन्—मेढ्रम्[5] । न्यङ्क्वादौ (गण० ७।३। ५३) मेघः ॥९७१॥

७२०. कित निवासे रोगापनयने च । गुप्तिज(६३।१।५) इत्यु पत्तौ सन्—चिकित्सति । चकरात् संशये च—विचिकित्सति । निवासे नास्ति—केतति । केतनम् । संकेतः । केतुः । केतकी । चुरादौ केत निश्रावणे (१०।२७६)—संकेतयति ॥९७२॥

७२१. अनुदात्ता उदात्तेतः ॥

७२२, दान अवखण्डने । इतो वहान्ता (१।७३१) दशानिट

---

१. इत आरभ्य श्रा अन्तं क्वचिन्न । २. द्र० हैमोणादि ६४१ ।

३. अत्र लिविशेन पाणिनिसूत्रस्य पाठान्तरं मत्वा तदीयसूत्रसङ्ख्या निर्दिष्टा।

४. न्यङ्क्वादिगणे—'संज्ञायामघावदाघनिदाघाः' इत्येवं पठ्यते ।

५. 'मेढ्रः' पाठा० ।

उभयपदिनश्च । मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य (३।१।६) इति सन्—दीदांसते, दीदांसति ॥९७३॥

७२३. शान तेजने । शीशांसते शस्त्रम्, शीशांसति ॥९७४॥

७२४. डुपचँष् पाके । सानुनासिकोऽकारः सर्वेषामुपलक्षणार्थः । उपदेशेऽजनुनासिक इत् (१।१।८) इतीत् संज्ञा यथा स्यात् । पचते, पचति । पक्त्रिमम् । षित्त्वात् (द्र० ३।३।१०४) अङ्—पचा । स्थागापापचो भावे (३।३।९५) क्तिन्—पक्तिः । पचो वः (८।२।५५) पक्वम् । पचादौ (गण० ३।१।१३४) श्वपचः । अणपीष्यते—श्वपाकः मांसपाकः न्यङ्क्वादिः (गण० ७।३।५३), तत्रैव निपातनात् कर्मकर्तरि उण्[1]—दूरेपाकुः फलेपाकुः । परिमाणे पचः (३।२।३३) खश्—द्रोणम्पचः । मितनखे च (३।२।३४) मितम्पचः[2], नखम्पचः । राजसूयसूर्य (३।१।११४) इति क्यप्प्रत्ययः । अलङ्कृञ् (३।२।१३६)—इत्युत्पचिष्णुः । पचेरेलिमः कर्मकर्तरि (द्र० काशिका ३।१।९६) पचेलिमा माषाः । मांसस्य पचि युड्घञोः (द्र० का० ६।१।१४४) लोपो वा—मांस्पाकः मांसपाकः; मांस्पचनम्[3] मांसपचनम्[3] ॥

७२५. भज सेवायाम् । भजते भजति । तृफलभज (६।४।१२२) इति भेजे, भेजुः । भजो ण्विः (३।२।६२) अर्धभाक् । सम्पृचानुरुध (३।२।१४२) इति घिनिण्[4]—भागी । खलं भगः पदं च (द्र० काशिका ३।३।१२५) इति भगः । घञ् (द्र० ३।३।१८—१९) भागः । भक्तुम् । भक्तः । चुरादौ भाज पृथक्कर्मणि (१०।१७१)—विभाजयति ॥९७६॥

७२६. रञ्ज रागे । रञ्जेश्च (६।४।२६) इति शपि न लोपः—रजते, रजति । कुषिरजोः प्राचां श्यन् परस्मैपदं च (३।१।९०) रज्यति वस्त्रं स्वयमेव । घञि च भावकरणयोः (६।४।२७) न लोपः—रागः, अधिकरणे रङ्गः । रञ्जेर्णौ मृगरमणे (६।४।२४ वा०) रजयति मृगान्, नेह-

१. 'उञ् पाठा० । २. इतोऽग्रे 'क्षपणः । आत्मनेपदे किंपचानः' इति क्वचिदधिकम् । अत्र अमरकोशो (३।१।४८) द्रष्टव्यः ।

३. 'मांस्पचनी, मांसपचनी' पाठा० ।

४. अष्टाध्यायां घिनुण् प्रत्ययः ।

रञ्जयति नटः। रजन्रजकरजःसु कित्वम् (तु० ६।४।२४ वा०) शिल्पिनि ष्वुन् नृतिखनिरञ्जिभ्यः (३।१।१४५ सू० वा०) रजकः[1]। महारजनं कुसुम्भम्[2]। गौरादौ (गण ४।१।४१) रजनी। जनीजृषक्नसुरञ्जोऽमन्ताश्च (१।५५४) इति मितसंज्ञाशासनादन्यत्राप्याहुर्यथा—राजर्षिकल्पो रजयन्[3]। सम्पृच (३।२।१४२)—रागी। पृषिरञ्जिभ्यां कित् (उ० ३।१११) इत्यतच्—
५ रजतम् ॥९७७॥

७२७. शप आक्रोशे। आक्रोशो विरुद्धानुध्यानम्। वाचा शरीरस्पर्शने चानेकार्थत्वात्। शपते, शपति। शप उपलम्भने (१।३।२१ वा०) तङ्, श्लाघह्नुङ्स्थाशपां (१।४।३४) इति सम्प्रदानम्—शपते चैत्राय।
१० शपति रिपुं पुरोधाः। शीङ्शपिरुहि (तु० उ० ३।११३) इत्यथच्—शपथः। शाशपिभ्यां ददनौ (उ० ४।९७) शब्दः[4]। शपेर्वश्च (उ० १।१०५) इति कलः—शबलो वर्णः ॥९७८॥

७२८. त्विषा दीप्तौ। त्वेषते, त्वेषति। त्विट्। नप्तृनेष्टृ (उ० २।९५) इति त्वष्टा अर्कः[5]। अवपूर्वो दाननिरसनयोश्चेति दुर्गः। निरसनमपाकरणम्।
१५ अवत्वेषति गां द्विजाय, अवत्वेषते मलम् ॥९७९॥

७२९. यज देवपूजासंगतिकरणदानेषु। यजते, यजति। वचिस्वपियजादीनां किति (६।१।१५) सम्प्रसारणम्—इज्यते, इष्टः, इष्टिः। लिट्यभ्यासस्योभयेषाम् (६।१।१७) इयाज। यजयाचरुच (७।३।६६) इति कुत्वं नास्ति—याज्यम्। प्रयाजानुयाजौ यज्ञाङ्गे (७।३।६२) अन्यत्र—प्रयागः,
२० अनुयागः। करणे यजः (३।२।८५) णिनिः—अग्निष्टोमयाजी। सुयजोर्ङ्वनिप् (३।२।१०३)—यज्वा। पूङ्यजोः शानन् (३।२।१२८)—यजमानः। ऋतौ-यजति (द्र० ३।२।५९)—ऋत्विक्। यजजपदशां यङः (३।२।१६६) इत्यूकः यायजूकः। यजयाच (३।३।९०) इति नङ्—यज्ञः। व्रजयजोर्भावे क्यप् (३।३।

---

१. अत्राह सायणः—'न्यासे तु अ कित्यपि रञ्जेर्मित्त्वविधानाज्ज्ञापकान्नलोप
२५ इति तरङ्गिणीपदमञ्जर्यौ' (पृष्ठ २०४)। अयं पाठो नोपलभ्यतेऽत्र तरङ्गिण्याम्।

२. 'काञ्चनं कुसुम्भं च' पाठा०। ३. अनुपलब्धमूलम्।

४. इतोऽग्रे 'शब्दनम्' इति क्वचिदधिकम्।

५. 'सूर्यः' पाठा०।

९८) इज्या । उणादौ यष्टिः[1] । अर्तिपृवपि (उ० २।११८) इत्युस्—यजुः काठकम्[2] ॥९८०॥

७३०. डुवप् बीजसन्ताने । बीजानां सन्तानः क्षेत्रे विस्तारणम् । वपते, वपति । [ प्रणिवपते ] प्रणिवपति ( द्र० ८।४।१७ ) । उप्यते । वप्ता । उवाप, ऊपुः, ऊपे । उप्तः । आसुयुवपि (३।१।१२६) इति ण्यत्—वाप्यः । उप्त्रिमम् । गृधिवपिभ्यां रन् (तु० उ० २।२७) वप्रः । अर्तिपृवपि (उ० २।११८) इत्युस्—वपुः । वसिवपिवादिराजि (द० उ० १।५३) इतीञ्—वापिः । भिदादौ (गण० ३।३।१०४) वपा ॥९८२॥

७३१. वह प्रापणे । वहते, वहति । प्रणिवहते, प्रणिवहति (द्र० ८।४।१७) । उवाह, ऊहुः; ऊहे । सहिवहोरोदवर्णस्य (६।३।११२) वोढा । अदिखादिनीवहीनाम् ( १।४।५२ वा० ) कर्मसंज्ञा नास्ति—वाहयति भारं चैत्रेण मैत्रः । वह्यं करणम् (३।१।१०२) । कर्त्रोर्जीवपुरुषयोर्नशिवहोः (३।४।४३) णमुल्—पुरुषवाहं वहति प्रवाहः । उह्यतेऽनेनेति वाहः[4] स्कन्धोऽश्वश्च[5] । गोचरसंचर । (३।३।११९) इति वहः साधुः वहो ध च (द० उ० १।१६६ कपाठः) इत्यूः—वधूः । वहिश्रिश्रुयुद्रुग्लाहा (उ० ४।५१) इति निः—वह्निः । अशित्रादिभ्य इत्रोत्रौ (उ० ४।१७३)—वहित्रम् ॥९८३॥

७३२. अनुदात्ताः स्वरितेतः ॥

७३३. वस निवासे । ७३३. अनुदात्त उदात्तेत् । वसति । उवास, ऊषुः । उष्यते, शासिवसिघसीनां च ( ८।३।६० ) इति षत्वम् । निवत्स्यति ( द्र० ७ । ४ । ४९ ) । न पादमि ( १।३।८९ ) इति तङ्—वासयते । भाषायां सदवसश्रुवः ( ३।२।१०८ ) ऊषिवान् । अमावास्यदन्यतरस्याम् (तु० ३।१।१२२) अमावास्या, अमावस्या । वसतिक्षुधोरिट् (७।२।५२) गत्यर्थाकर्मक (३।४।७२) इति क्तः—उषितः । मृडमृद (१।२।७) इति क्त्वा

---

१. वसेस्तिः (उ० ४।१७६) इति बाहुलकाद् यजेरपि ।

२. क्षीरस्वामी कठशाखाध्यायी आसीदिति संभाव्यते । सम्प्रति कश्मीरेष्वेव कठब्राह्मणा उपलभ्यन्ते । ३. 'टुवप' इति काशकृत्स्नः (पृष्ठ १६०) ।

४. 'वहः' पाठा० । तच्चासाधु, उत्तरत्र वहशब्दस्य निर्देशात् ।

५. 'स्कन्धदेशः' पाठा० ।

कित्—उषित्वा। वसेस्तव्यत् कर्तरि णिच्च (३।१।९६ वा०)—वास्तव्यः। अमेरातिः, वहिवस्यर्तिभ्यश्चित् (उ० ४।५९,६०)—वसतिः। शॄस्वृस्निहि (उ० १।११) इत्युः—वसुः। वसेस्तुन् (उ० १।७६) वस्तु। अगारे णिच्च (उ० १।७७) वास्तु। अर्तिकमिभ्रमिदेविवासिभ्यश्चिद् (तु० द० उ० ८।६२) इत्यरन्—
५ वासरम्। वसिवपि (उ० ४।१२५) इतीञ्—वासिः, वासी तक्षभाण्डम्। रक् (द्र० उ० २।१३)—उस्रो रश्मिः, षत्वं नेष्यते। धापॄवस्यज्यतिभ्यो नः (उ० ३।६) वस्नं मूल्यम्। वसेः सरः (द्र० उ० ३।७१)—वत्सरः। वसेः कसुन् (द्र० उ० ४।२३४)—उषः। उपसर्गे वसेः (उ० ३।११४) इत्यथः—आवसथः तॄभूवहिवसि (उ० ३। १२८) इति झच्—वसन्तः
१० वसस्तिप् (तु० द० उ० १।७४—कपाठ) वस्तिर्मेढ्रोर्ध्वे नाभेरधः, वस्तयो वस्त्रान्तावयवाः। वस्त गन्ध अर्दने (१०।१३३) अस्य वस्तश्छागः। अदादौ वस आच्छादने (२।१४) वस्ते वस्त्रम्, वासस्। दिवादौ वसु स्तम्भे (४।१०९) वस्यात। चुरादौ वस स्नेहच्छेदापहरणेषु[1] (१०।१८२), वास उपसेवायाम् (१०।२६९) वासयति ॥९८३॥

१५ ७३८. वेञ् तन्तुसन्ताने। इतस्त्रयोऽनिटः। वयते, वयति। वेञो वयिः-(२।४।४१) ग्रहिज्यावयि (६।१।१६) इति सम्प्रसारणम्, लिटि वयो यः (६।१।३८) इति यकारस्य नास्ति—ऊयुः। थलि च[2]—उवयिथ। वश्चास्यान्यतरस्यां किति (६।१।३९) ऊवुः। लिट्यन्यतरस्याम् (२।४।४०) इति यदा वयिर्नास्ति तदा वेञ इति धातोरभ्यासस्य च सम्प्र-
२० सारणनिषेधः—ववौ, ववुः। शाच्छासाह्वाव्यावेपां युक् (७।३।३७) वाययति। ह्वावामश्च (३।२।२) इत्याणे तन्तुवायः[3]। ल्यपि च (६।१।४१) इति न सम्प्रसारणम्—प्रवाय। ऊतियूतिजूति (३।३।९७) इत्यूतिर्वपनम्। वेञो डिः (तु० द० उ० १।६२) विः पक्षी। मनिन् (द० उ० ६।७३) वेमा। वेञो-डित् (द० उ० १।३९)—वीचिः ॥९८४॥

२५ १. '० छेदोपसंहरणेषु' पाठ०।

२. अत्र लिविशेन भ्रान्त्येदं सूत्रप्रतीकमिति मत्वा ६।४।१२१ संख्या निर्दिष्टा, नात्रस्य सूत्रस्य किंचित् कार्यम्।

३. 'तन्त्रवायः' पाठ०।

**७३६. व्येञ् संवरणे।** संवरणमाच्छादनम्[1] । व्ययते, व्ययति। संव्रीयते । न व्यो लिटि (६।१।४६) इत्येच आत्त्वं नास्ति—संविव्याय । इडत्त्यर्तिव्ययतीनाम् (७।२।६६) संविव्ययिथ । अनभ्यासस्य[2] इत्युपधाद्दीर्घो नास्ति । स्वपिस्यमिव्येञां यङि (६।१।१९) सम्प्रसारणम्—संवेवीयते । व्यश्च (६।१।४३) इति न ल्यपि सम्प्रसारणम्—संव्याय । विभाषा- परेः (६।१।४४)—परिवीय परिव्याय । शाच्छासाह्वा (७।३।३७) इति युक्- संव्याययति । नौ व्यो यलोपः पूर्व[पद]स्य च दीर्घः ( उ० ४।१३६ ) नीविः, नीवी[3] ।।९८५।।

**७३७. ह्वेञ् स्पर्धायां शब्दे च[4] ।** ह्वयते, ह्वयति । निसमुपविभ्यो ह्वः (१।३।३०) तङ्—निह्वयते, संह्वयते, उपह्वयते, विह्वयते । स्पर्धायामाङः (१।३।३१) मल्लो मल्लमाह्वयते । आहूयते । ह्वः सम्प्रसारणम्, अभ्यस्तस्य च (६।१।३२,३३) जुहुवुः, णौ च संश्चङोः[5]—जुहावयिषति, अजूहवत् । लिपिसिचिह्वश्च (३।१।५३) इत्यङ्—आह्वत् । आत्मनेपदेष्वन्यतरस्याम् (३।१।५४) आह्वत आह्वास्त । शाच्छासा (७।३।३७) इति युक्—ह्वाययति । ह्वावामश्च (३।२।२) इत्यण्—स्वर्गाह्वायः । आतश्चोपसर्गे (३।१।१३६) प्रह्वः । ह्वः सम्प्रसारणं च न्यभ्युपविषु (३।३।७२) इत्यप्—निहवः । आङि युद्धे (३।३।७३) आहवः । निपानमाहावः (३।३।७४) । भावेऽनुपसर्गस्य ( ३।३।७५ ) हवः । छित्वरादौ (द्र० उ० ३।१) उपह्वरः । बाहुलकाद् आह्वयः ।।९८६।।

---

१. 'संवरणमुपयोगः । व्ययति व्ययते व्ययं करोतीत्यर्थः' इति काशकृत्स्न-धातुपाठकन्नडटीकानुसारमर्थनिर्देशः (द्र० पृष्ठ १६०) । एतद्धातुनिष्पन्ने 'व्यय' शब्दे चायमेवार्थः स्पष्टमुपलभ्यते ।

२. अत्र लिपिदोषेन भ्रान्त्या ६।१।८ सूत्रसंख्या निर्दिष्टा । वाक्यस्यास्य तात्पर्यं न विद्मः ।

३. 'मूलधनम्' इति क्वचिदधिकम् ।

४. 'स्पर्धायां वाचि' इति काशकृत्स्नः (पृ० १६१) ।

५. ह्वः संप्रसारणम् (६।१।३२) इत्यत्र 'णौ च संश्चङोः' इत्यनुवर्तनादिति भावः । लिपिदोषेनात्र भ्रान्त्या सूत्रनिर्देश इति बुद्ध्वा ६।१।३१ सूत्रसंख्या निर्दिष्टा । 'णौ च संश्चङोः' इत्यनेन सूत्रेण (६।१।३१) तु श्वयतेर्विभाषा संप्रसारणं विधीयते ।

७३८. [अनुदात्ताः][1]।

७३९. वद व्यक्तयां वाचि, ७४०. उदात्त उदात्तेत्[2]।

वदति। वदिता। भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः (१।३।४७) तङ्—वदते चार्वी लोकायते, भातीत्यर्थः; गेहे वदते, यतत इत्यर्थः, क्षेत्रे विवदन्ते, नाना वदन्तीत्यर्थः; परदारानुपवदते, रहस्युपच्छन्दयतीत्यर्थः। व्यक्तवाचां समुच्चारणे (१।३।४८) सम्प्रवदन्ते[3] द्विजाः। विभाषा विप्रलापे (१।३।५०) विप्रवदन्ते मौहूर्तिकाः, विप्रवदन्ति वा[4]। अनोरकर्मकात् (१।३।४९) अनुवदते कठः कलापस्य[5]। अपाद् वदः (१।३।७३) अकर्त्रभिप्राये क्रियाफले—अपवदते, अपवदति। १० उद्यते। वदव्रज (७।२।३) इति वृद्धिः—अवादीत्। न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः (१।३।८९) आत्मनेपदं णिचि—वादयते वीणाम्। अवद्यपण्यवर्यागर्ह्य (३।१।१०१) इत्यवद्यं गर्ह्यं साधु। राजसूयसूर्य (३।१।११४) इति मृषोद्यम्। वदः सुपि क्यप् च (३।१।१०६) ब्रह्मोद्यम्, ब्रह्मवद्यम्। प्रियवशे वदः खच् (३।२।३८) प्रियंवदः, वशंवदः। यजजपदशां यङः (३।२। १५ १६६) वदेरपीष्यते[6] वावदूकः। उक्तिः—तितु (७।२।९) इति नेट्, इडपीष्यते—उदितिः। मृडमृद (१।२।७) इति क्त्वा कित्—उदित्वा। अच्छगत्यर्थवदेषु (१।४।६९) गतिसंज्ञः—अच्छोद्य। वृतॄवदि (उ० ३।६२) इति सः—वत्सः। वदेरान्यः (उ० ३।१०४) वदान्यो दाता[7]। वदन्योऽपीष्टः। वसिवपिवदि (द० उ० १।४३) इतीञ्—वादिः। भूवादिगृभ्यो णित्रन् (उ० ४।१७७) २० श्वेत०) वादित्रम् ॥९८७॥

---

१. वेञादीनामनुदात्तत्वविधानार्थं सूत्रमिदमपेक्षते, न चोपलभ्यते।

२. काकाक्षिन्यायेन सूत्रमिदमनेनोत्तरेण चोभाभ्यां संबध्यते।

३. 'प्रवदन्ते' पाठा०। ४. 'वा' क्वचिन्न।

५. 'कलापकस्य' पाठा०।

२५ ६. 'यजजप इत्यत्र वदेरनुपदेशः कार्य इति पदकारवचनादूकः' इति अमरटीकायां (३।१।३५) क्षीरस्वामी। लिखितेनात्र तुलनायै उणादेः ४।४१ संख्या निर्दिष्टा। सा चिन्त्या, यजजप इत्याद्यूकविधायकस्य सूत्रस्य प्रत्यक्षं निर्देशात्।

७ 'दानशीलः' पाठा०।

७४१. टुओश्वि गतिवृद्ध्योः, सेट् । श्वयति । श्वयिता । श्वयथुः । ओदित्त्वात् । (द्र० ८।२।४५) निष्ठानत्वम्, श्वीदितो निष्ठायाम् (७।२।१४) नेट्—शूनः । यजादित्वात् (द्र० ६।१।१५)—शूयते । विभाषा श्वेः (६।१।३०) लिड्यङोः सम्प्रसारणम्—शिश्वाय,शुशाव; शिश्वियुः, शुशुवुः; शेश्वीयते, शोशूयते । णौ च संश्चङोः (६।१।३१) शुशावयिषति, शिश्वाययिषति; अशूशुवत्, अशिश्वयत् । विभाषा धेट्श्व्योः (३।१।४९) चङ्—अशिश्वियत्, अश्वयीत्—ह्म्यन्तक्षण (७।२।५) इति वृद्धिर्नास्ति । जॄस्तम्भु (तु० ३।१।५८) इत्यङ्, श्वयतेरः (७।४।१८) अश्वत् । श्वनुक्षन् (उ० १।१५६) इति श्वा, मातरिश्वा ॥९८९॥

७४२. वृतु । यजादिरन्तर्गणो वर्तितः ।

भट्टेश्वरस्वामिपुत्र-क्षीरस्वाम्युत्प्रेक्षितायां
धातुवृत्तौ क्षीरतरङ्गिण्यां
शब्विकरणो भूवादिगणः
सम्पूर्णः समाप्तः[२] ।



---

१. 'इकां यभिर्व्यवधानं व्याडिगालवयोः' इति वचनात् (भाषावृत्तौ ६।१।७७ उद्धृतम्) वकारस्य व्यवधानम् । यत्तु महाभाष्यकृता 'भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते' ( १।३।१ सूत्रे ) इत्युक्तं, तस्यायमर्थः—भूवादयो धातवः (१।३।१) इति सूत्रयता भगवता पाणिनिना वकारस्य व्यवधानं कृत्वा यण्व्यवहितोऽपि सन्धिर्भवतीति सूचयता छात्राणां मङ्गलं विहितम् । अत एवोक्तं पतञ्जलिना— 'अध्येतारश्च मङ्गलयुक्ता यथा स्युः' । अत्र विशेषोऽस्मदीये 'संस्कृत व्याकरण-शास्त्र का इतिहास' नाम्नि ग्रन्थे (सं० २००७) प्रथमाध्याये द्रष्टव्यः (पृष्ठ २१—२४) ।

२. 'इति क्षीरस्वाम्युत्प्रेक्षितायां क्षीरतरङ्गिण्यां धातुवृत्तौ भूवादिगणः समाप्तः' इति पाठान्तरम् ।

# ॥ अथादादिगणः ॥

## [ अथानिटौ परस्मैपदिनौ ]

१. अद भक्षणे । इतो द्वावनिटौ परस्मैपदिनौ च । अत्ति, अदिप्रभृतिभ्यः शपः (२।४।७२) लुक् । अदन् अदती । व्यतिहारे (द्र० ५ १।३।१४) व्यत्यदन्ते[1] । लुङ्सनोर्घस्लृ (२।४।३७)—अघसत्, जिघत्सति । लिट्यन्यतरस्याम् (२।४।४०)—जघास, जक्षुः, शासिवसिघसीनां च (८।३।६०) इति षत्वम् । आद । इडत्त्यर्तिव्ययतीनाम् (७।२।६६) आदिथ । अत्स्यति । अदः सर्वेषाम् (७।३।१००) इति लङ्यट्—आदत । अदिखादिनीवहीनां (१।४।५२ वा०) कर्मसंज्ञा नास्ति—आदयति पिण्डीं चैत्रेण । अदो १० जग्धिर्ल्यप्ति किति (२।४।३६) जग्धम्, जग्ध्वा, प्रजग्ध्य । उणादावन्नम् (द्र० उ० ३।१०) । सृघस्यदः क्मरच् (३।२।१६०) अद्मरः, घस्मरः । घस्लृ-भावेऽप्युपसंख्यानम् (२।४।३७ वा०) प्रात्तीति प्रघसः । उपसर्गेऽदः (३।३।५९) विघसः, नेह—घासः, घञपोश्च (२।४।३८) इति घस्लादेशः । नौ ण च (३।३।६०)—न्यादः, निघसः । अदोऽनन्ने (३।२।६८) क्विप्[2]—आममत्ती- १५ त्यामात्[3], नेह—अन्नादः, अण (द्र० ३।२।१) । क्रव्ये च (३।२।६९) क्रव्यात्[4], क्रव्यादः । अदिशदि (उ० ४।६५) इति क्रिन्—अद्रिः । अदेस्त्रिन् त्रिनिश्च (द्र० द० उ० १।३७) अत्रिर्मुनिः, अत्त्री क्रिमिः । जत्त्वादौ (द्र० उ० ४।१०२) अत्त्रुः[5] । अदेर्धश्च (द० उ० ६।७१) इति क्वनिप्—अध्वा मार्गः । अदो नुम् धौ च (द० उ० ९।६६) इत्यसुन्— २० अन्धोऽन्नम् । घसेः किच्च (उ० ४।३४) इतीरन्—क्षीरम् ॥१॥

२. हन हिंसागत्योः । हन्ति । हन्ता । ऋद्धनोः स्ये (७।२।७०) इतीट्—हनिष्यति । हो हन्तेर्ञ्णिन्नेषु (७।३।५४) इति घः—अघानि,

---

१. 'व्यत्यत्ते' पाठा० ।

२. सार्वत्रिकोऽप्ययपपाठोऽयम् 'विट्' इति शुद्धः पाठः ।

३. अयं वा [ऽग्निरा] ऽऽमाद् येनेदं मनुष्याः २५ पक्त्वाऽश्नन्ति । श० ब्रा० १।२।१।४ ॥

४. येन [अग्निना] पुरुषं दहन्ति स क्रव्यात् । श० ब्रा० १।२।१।४॥

५. 'अत्रुः क्षुद्रजन्तुः' इति हैमोणादिः (सूत्र ८०६) ।

**६. स्तृञ् आच्छादने**[1] । स्तृणोति[2], स्तृणुते । गुणोर्तिसंयोगाद्योः (७।४।२६)—आस्तर्यते । विस्तृतः । क्र्यादौ स्तॄञ् (६।१३)—आस्तृणाति, आस्तीर्यते, आस्तीर्णः ॥६॥

**७. कृञ् हिंसायाम्** । कृणोति, कृणुते । आर्धधातुके करोतिवत् (८।११)—चकार, चक्रे ॥७॥

५

**८. अनुदात्ताः** ।

**९. वृञ् वरणे**[3], **१० धूञ्**[4] **कम्पने, ११. उदात्तौ** । वृणोति, वृणुते । प्रावरिता प्रावरीता, वृतो वा (७।२।३८) इतीटो वा दीर्घः । सिचि परस्मैपदेषु (तु० ७।२।४०) इतोद्—प्रावारीत्, प्रावारिष्टाम् । लिङ्-

१० सिचोरात्मनेपदेषु (७।२।४२) वा—प्रावरिषाताम् प्रावृषाताम्, वृषीष्ट वरिषीष्ट, न लिङि (७।२।३९) इति दीर्घो नास्ति । इट् सनि वा (७।२।४१)—वुवूर्षति विवरिषति विवरीषति । अवद्यपण्यवर्या (३।१।१०१) इत्यनिरोधे[5] वर्यः, वार्योऽन्यः । एतिस्तुशास (३।१।१०९) इति क्यप्—वृत्यम् । ण्यदपीष्यते—वार्यम् । संज्ञायां भृतॄ (३।२।४६) इति पतिंवरा कन्या । ग्रहवृदृ

१५ ३।३।५८) इत्यप्—वरः । नौ वृ धान्ये (३।३।४८) घञ्—नीवारः । वृणोतेराच्छादने (३।३।५४)—प्रावारः । अण्डन् कृसृभृवृञः (उ० १।१२९)—वरण्डः । जॄवृञ ऊथन् (उ० २।५ श्वेत० A. B. पाठः)—वरूथो रथगुप्तिः सुयुरुवृञो-युच् (उ० २।७४)—वरणः । अजिवृरीभ्यो निच्च (उ० ३।३८)—वर्णुर्नाम नदः । कृगॄशॄवृञ्चतिभ्यः ष्वरच् (दश० उ० ८।४७)—वर्वरः कुञ्चिताः

२० केशाः । सृवृभूशुषिमुषिभ्यः कित् (दश० उ० ३।१६)—वृकः । वृञश्चित् (उ० (३।१०७)—वरत्रा चर्मरज्जुः । जनिदाच्युः (उ० ४।१०४) इति वृशो वाशिका । वसिवपियजिराजि (दश० उ० १।५३) इतीञ्—वारि । ण्यन्तात् क्विपि वाः—वारां निधिः[6] । धूञ् कम्पने[7] । धूञ् इतीहामुं शिवस्वामी

---

१. 'छादने' पाठा० । २. 'आस्तृणोति' पाठा० ।

२५ ३. 'अनिरोधे' पाठा० । ४. अत्रविषये अग्रे टिप्पणी ७ द्रष्टव्या ।

५. 'अनिरोधने' पाठा० । ६. कुत्रत्योऽयं प्रयोग इति न ज्ञायते ।

७. 'अत्र कः स्वामिसम्मतः पाठ इत्यत्र विप्रवदन्ते उद्धर्तारः । तद्याह सायणः—'अत्र स्वामी तु ह्रस्वान्तममुं पठित्वा प्रयोगवशाद् दीर्घान्तमप्याह ।

दीर्घमाह—धूनोति, धूनुते । स्वरतिसूति (७।२।४४) इति वेट्—विधोता विधविता । विधूतः । धूञ् प्रीञोर्नुक् (७।३।३७ वा०)—विधूनयति । धुञ् इति चन्द्रः[1] (तु० धातु० ५।९)—धुनोति, विधुतः । अर्तिलूधूसूखनसहचर इत्रः (३।२।१४८) इति धवित्रम् । इषियुधि (उ० १।१४५) इति मक्—धूमः । कृधूमदिभ्यः कित् (उ० ३।७३)—धूसरः । क्र्यादौ (९।१६) धुनाति, तुदादौ धू विधूनने (६।१६)—धुवति ॥९॥

**१२. दुदु उपतापे** । इतश्चत्वारोऽनिटः । दुनोति । दोता । दवथुः (द्र० ३।३।८९) । भौवादिकेन ग्रहणानि, दु द्रु गतौ (१।६७५)—दवति ॥१०॥

**१३. हि गतौ वृद्धौ च** । हिनुमीना (८।४।१५) णत्वम्—प्रहिणोति । हेरचङि (७।३।५६) इति कुत्वम्—प्रजिघाय । कमिमनि (उ० १।७३) इति तुन्—हेतुः । मक् (द्र० उ० १।१४७)—हिमम् । मनिन् (दश० उ० ६।७३)—हेम । ऊतियूति (३।३।९७) इति हेतिरायुधम् ॥११॥

**१४. पृ प्रीतौ** । पृणोति । पर्त्ता । पुपूर्षति, इट् सनि वा (७।३। इति नास्त्युपदेशाधिकारात्[2] (द्र० ७।२।१०) ॥१२॥

---

शिवस्वामिकश्यपौ तु दीर्घान्तमाहतुः' (धातुवृत्ति पृष्ठ ३१६) इति । प्रक्रियाकौमुदीटीकायां विठ्ठलस्त्वाह—'क्षीरस्वामी दीर्घमाह, अन्ये ह्रस्वम्' (पाठान्तरे 'शिवस्वामिनाम निर्दिष्टम्) (भाग २, पृष्ठ २५४) । अत्र विठ्ठलोद्धृतः पाठ एव युक्ततरः प्रतिभाति एकादशसूत्रे 'उदात्तौ' इति निर्देशात् । ह्रस्वपाठे तु 'धुञ्' अनुदात्तः स्यात् । क्र्यादौ (९।१६) 'स्वादौ धूञ्धुञौ धूनोति धुनोति' इत्युभयं पठिष्यति क्षीरस्वामी, एवं तुदादावपि (६।९६) । अयं च चान्द्रपाठं स्वीकृत्योक्तमिति द्रष्टव्यम् । सायणस्तु धुञ् इति पठन् अन्ते 'स्वादय उभयतोभाषाः वृत्रर्जमनुदात्ताः । तस्यानुदात्तमध्ये पाठ ऋकारान्तोभयतोभाषानुरोधेन' इत्याह (धातुवृत्ति पृष्ठ ३१७) ।

[1] मुद्रिते चान्द्रधातुपाठे तु 'धूञ् कम्पने' इति दीर्घान्तः पठ्यते । सायणस्तु 'उभयमपीति चान्द्राः इति सुधाकरः' इत्याह (धा० वृ० पृष्ठ ३१६) । अत्र चान्द्रधातुपाठो भ्रष्ट इति प्रतीयते । 'धूञ् कम्पने' इतोऽग्रे मुद्रितग्रन्थे 'विभाषिताः' इति पठ्यते । तत्रापि 'विभाषितः' इत्येकवचनमेव युक्तम्, धूञ एव विभाषितेट्त्वात् ।

[2] उपदेशे दीर्घऋकारान्तादिति भावः । अयं तु सनि दीर्घः ।

१५. स्मृ प्रीतिबलनयोः । बलनं जीवनम्[1] । स्मृणोति । सस्मार । स्पृ इत्येके । ते तु छान्दसप्रायौ[2] ॥१३॥

१६. अनुदात्ताः । नोदात्तेत[3] एकाच्त्वात् ।

१७. आप्लृ व्याप्तौ । चत्वारोऽनिटः । आप्नोति । आपत् (द्र० ३।१।५५) । आप्ता । आप्ज्ञपृध्रथामीत् (तु० ७।४।५५)—ईप्सति । उदके नुम्भौ च (उ० ४।२१०) इत्यम्भः ल्यपि लघुपूर्वात्, विभाषाऽऽपः (६।४।५६, ५७) इति णेर्वा लोपः—प्राप्य प्रापय्य । गुरोश्च हलः (३।३।१०३) इत्यङि प्राप्ते क्तिन् आबादिभ्यः (३।३।९४ वा०) आप्तिः ॥१४॥

१८. शक्लृ शक्तौ । शक्नोति, शक्नुवन्ति । अन्यद् दिवादौ (४।७८) उक्तम् । सनिमीमा (७।४।५४) इति शिक्षति । अशकत् । पुषादित्वाद् (दिवादौ ७३—९२) अङि सिद्धे लृदित्वम् आत्मनेपदार्थं[4] कर्मव्यतिहारे[5]—व्यत्यशकत । शकधृषज्ञा (३।४।६५) इति तुमुन्—शक्तो घटं कर्तुम् । शक्तिः ॥१५॥

१९. राध साध संसिद्धौ । संसिद्धिः फलसम्पत्तिः । राधीक्ष्योर्यस्य विप्रश्नः (१।४।३९)—चैत्राय राध्नोति । राधो हिंसायाम् (६।४।१२३) एत्वाभ्यासलोपौ—अपरेधुः । राधो हिंसायाम् सनीस् वक्तव्यात् (द्र० ७।४।५४ वा०) प्रतिरित्सति । क्तिन् आबादिभ्यः (३।३।९४ वा०)—

---

१. 'प्रीतिचलनयोरित्यन्ये । चलनं जीवनमिति स्वामी' इति धातुवृत्तौ (पृष्ठ ३१६) पाठः ।

२. 'ते तु छान्दसप्रायाः' 'तौ तु छान्दसप्रायौ' इति वा युक्तः पाठः । 'इमौ पृणोतिश्च त्रयश्छान्दसा' इति स्वामिकाश्यपौ' इति धातुवृत्तिः (पृष्ठ ३१६) ।

३. 'न तूदात्तेतः' पाठा० । अत्र पृ० ५, पं० ३,४ स्मृतः श्लोको द्रष्टव्यः ।

४. चिन्त्यमिदम् । इह हि लृदित्वाभावे सिच् स्यात् । नह्यस्मात् सौवादिकात् दैवादिकस्य पुषादित्वादङ् स्यात् ।

५. इतोऽग्रे लिपिकृतः ३।१।८७ सूत्र संख्यां निर्दिश्य 'कर्मवत् कर्मणा तुल्यक्रियः' इति सूत्रं द्रष्टव्यमिति संकेतितवान् । कर्मवत् सूत्रं तु कर्मकर्तरि प्रवर्तते । इह तु कर्मव्यतिहारस्य विषयः । अतोऽत्रात्मनेपदप्रदर्शनाय 'कर्तरि कर्मव्यतिहारे' (१।३।१४) इत्यस्य संख्या निदर्शनीया ।

रादूधिः । दिवादौ राधोऽकर्मकाद् वृद्धावेव (४।७१)—राध्यति । साध्नोति । सिषात्सति । अषोपदेश इत्येके—सिसात्सति । नन्द्यादौ (द्र० ३।१।१३४ वा०) ण्यन्तात् साधनः । कृवापाजि (उ० १।१) इत्युण्—साधुः । दिवादौ साध्यति[1] ॥१६, १७॥

२०. अनुदात्ता उदात्तेतः । ५

२१. अशू व्याप्तौ । अश्नुते । अष्टा, अशिता । अश्नोतेश्च (७।४।७२) इति नुट्—व्यानशे[2] । स्मिपूङ्रञ्ज्वशां सनि (तु० ७।२।७४) इतीट्—अशिशिषते । अटयर्त्यशूर्णोतीनां (३।१।२२ वा०) यङ्—अशाश्यते ।[3] कृवापाजि (उ० १।१) इत्याशु । शावशेराप्तौ (उ० १।४४) उरन्—श्वशुरः । अशूप्रुषि (उ० १।१५१) इति क्वन्—अश्वः । अशे रश च १० (उ० २।७५) इति युच्—रशना । अशे रश् च (दश० उ० १।१५ ङपाठः) इति मिः—रश्मिः । अशिपणाय्यो रुडायलुकौ च (उ० ४।१३३)—राशिः । अर्तिसृधृधमि (उ० २।१०२) इत्यनिः—अशनिः । मनिन् (दश० उ० ६।७३) अश्मा । अशेर्देवने[4] (उ० ३।६५) सः—अक्षः । अशेः सरन् (उ० ३।७०) अक्षरम् । अशेर्निद् (उ० ३।१५६) इति सिः–अक्षि । अशेर्देवने युट् च (दश० १५ उ० ९।५१ ङपाठः) यशः । क्र्यादौ अश भोजनने (९।५२)–अश्नाति ॥१८॥

२२. ष्टिघ आस्कन्दने । स्तिघ्नुते ॥१९॥

२३ उदात्तावनुदात्तेतौ ।

२४. तिक तिग च । इतश्चस्वन्ता (५।३१) नव सेटः परस्मैपदिनश्च । चकारादू आस्कन्दने ।[5] तिक्नोति, तिग्नोति । के (द्र० २० ३।१।१३५) तिकः ॥२०, २१॥

---

१. नहि क्षीरतरङ्गिण्यां साधधातुर्दिवादौ पठ्यते । काशकृत्स्नधातुपाठे (पृष्ठ १८६) तु 'राध साध संसिद्धौ' इति दिवादौ पठ्यते । तदनुसारं चन्द्रकान्तन्त्रकारावपि दिवादौ पठतः (चा० ५।२२) ।

२. 'आनशे' पाठा० । ३. धातुप्रदीपोऽत्र द्रष्टव्यः । २५

४. 'वने' 'धने' पाठान्तरे ।

५. यथा तु काशकृत्स्नकातन्त्रचान्द्रहैमशाकटायनधातुपाठेषु पाठस्तथा तिक तिग धात्वोर्हिंसार्थः, न तु स्कन्दनार्थः । प्रतीयते कस्यचित् प्राचीनश्लोकबद्ध-

२५. षघ हिंसायाम् । सघ्नोति । सिसघिषति । सिषाघयिषति । दुर्गस्याषोपदेशो[1]ऽयम्—सिसाघयिषति । तिक तिघ चषघ[2] हिंसायामित्येके[3]—तिघ्नोति चषघ्नोति[2] ॥२२॥

२६. ञिधृषा प्रागल्भ्ये । धृष्णोति । धृष्टः, प्रधृष्टः प्रधर्षितः धृष्टमनेन, धर्षितम्, निष्ठाशीङ्स्विदि (१।२।१९) इति कित्त्वं नास्ति । त्रसिगृधिधृषिक्षिपेः क्नुः (३।२।१४०)—धृष्णुः । भाषायां शासियुधि (३।३।१३० वा०) इति युच्—दुर्धर्षणः । धृषेर्धृष च संज्ञायाम् (उ० २।८२) इति क्युः—धृषणा धीः । शकधृषज्ञा (३।४।६५) इति तुमुन्—धृष्णोति भोक्तुम् । ऋत्विग्दधृग् (३।२।५९) इति दधृक् । चुरादौ धृष प्रसहने (१०।२३८)—धर्षयति ॥२३॥

२७. दन्भु दम्भ । दभ्नोति । श्रन्थिग्रन्थिदम्भिस्वञ्जीनां (द्र० १।२।६ काशिका) किति नलोपः—देभुः । सनीवन्तर्ध (७।२।४९) इति वेट्—दिदम्भिषति, अनिट् पक्षे—दम्भ इच्च (तु० ७।४।५६)—धिप्सति धीप्सति, हलन्ताच्च (१।२।१०) इति कित्त्वे हल्ज्ञातिराश्रीयते । दब्ध्वा दम्भित्वा । दब्धः ॥२४॥

२८. ऋधु वृद्धौ । ऋध्नोति । दिवादौ (४।१३५) ऋध्यति । तत्रैव ग्रहणान्युक्तानि ॥२५॥

२९. छन्दसि । आगणान्ताच्छन्दोऽधिकारः[4] ।

---

धातुपाठस्यानुकरणेन मध्ये चकारः पठितः स्यात्—'ष्टिघ आस्कन्दने तिक, तिग च षघ हिंसायाम्' । इदं रहस्यमविदित्वैव कैश्चिद् वृत्तिकारैश्चकाराद् आस्कन्दनार्थो गृहीतः । अपरैश्च चकारं षघ-धातुना संयोज्य चषघ धातुः स्वीकृतः । द्र० इहैव उत्तरधातुसूत्र (२५) व्याख्या ।

१. दुर्गः कातन्त्रधातुपाठव्याख्याता । कातन्त्रधातुपाठे तु षघ इत्येव पठ्यते । स्वयमपि ऋक्षि चिरि (३३) इत्युत्तरसूत्रव्याख्याने दुर्गनाम्ना 'षघ' इति षोपदेशमेव पठिष्यति ।

२. 'चखघ, चखघ्नोति' पाठा० । अयं च षकारस्यैव खकारोच्चारणजन्योऽपपाठः । ३. पूर्वपृष्ठस्था पञ्चमी टिप्पणी द्रष्टव्या ।

४. उद्धृतमिदं पुरुषकारे (पृष्ठ २४) । छन्दसि इति सूत्रस्य इदं व्याख्यानं

३०. अह व्याप्तौ । अह्नोति ॥२६॥

३१. दध घातने । दध्नोति ॥२७॥

३२. चमु भक्षणे । आचम्नोति । भ्वादौ (१।३१५) आचामति ॥२८॥

३३. ऋक्षि चिरि जिरि दाश दृ हिंसायाम् । ऋक्ष्णोति[1] आनृक्ष[1] । ऋक्ष्णोति क्षिणोति इत्येके । चिरिणोति, जिरिणोति । एकाचां-च चिरेर्जिरेः (द्र० १।१ पृ० ५ पं० ३) इति नानुबन्धिता । दाश्नोति । दाशः । दृणोति । दुर्ग[2]स्तु तिक तिघ[2] षघ[3] ऋक्ष चिरि चिरि जिरि दाश दृ हिंसायाम्[2]

'दध घातने' (३१) इत्युत्तरसूत्रान्तरं मुद्रितं जर्मनसंस्करणे । स च लेखक प्रमादजः । अस्माभिस्त्वयं यथास्थानं प्रापितः ।

१. 'ऋक्ष्णोति, आनर्क्ष' इति लिबिशपाठः । ऋक्षि-धातोरिदित्त्वान्नुमा भाव्यम् । पुरुषकारस्तु स्वामिनाम्ना शुद्धमेव सनुमं पाठमुदाजहार । तथा हि—"क्षीरस्वामी तु ऋक्षि इति पठित्वा ऋङ्क्ष्णोति इति आनृङ्क्ष इति चोदाहृत्य ऋक्ष्णोति क्षिणोति इत्येके" इत्याह (पुरुष० पृष्ठ २४) ।

२. दुर्गः कातन्त्रधातुपाठव्याख्याता । अस्मदीये कातन्त्रधातुपाठस्य हस्तलेखे 'तिघ' स्थाने 'तिग' पठ्यते । सायणोऽपि धातुवृत्तौ दुर्गनाम्ना 'तिग' इत्येव पठति । (पृष्ठ ३२२) । षघ धातोरुत्तरमस्मद्धस्तलेखे कश्चित् पाठस्त्रुटितः । सायणस्तु 'षघ रि क्षि चिरि' इत्येवं पठति (पृष्ठ ३२२) । 'दाश' स्थाने कातन्त्रधातुपाठे 'दास' इति पठ्यते, 'दृ' स्थाने च 'दृह' । सायणस्तु 'दुङ्' पठित्वा 'दुनुते' इत्युदाजहार (पृष्ठ ३२२) । हिंसायाम्' इत्यस्य स्थाने कातन्त्रपाठे 'जिघांसायाम्' पाठः । काशकृत्स्नधातुपाठे तु 'तिक तिग षिघ तिघु [तीघु] चिरि जिरि दास द्रहि जिघांसायाम्' इति पठ्यते (पृष्ठ २०९) । अत्र 'दुहि' स्थाने 'दुह' इति शुद्धः पाठो द्रष्टव्यः, व्याख्यायां 'दुह्णोति' इति प्रयोगनिदर्शनात्', कातन्त्रे च तथैव पाठात् ।

इदं चात्रावधेयम्—पाणिनीये धातुपाठे छान्दसत्वेन स्मृता धातवः काशकृत्स्नव्याख्याने विना छन्दोनिर्देशं पठिताः । तमनुसृत्यैत्र च लौकिकमात्रविषये कातन्त्रेऽपि पठिताः । तदनुसारमेव च चान्द्रेऽपि 'ऋक्ष चिरि जिरि हिंसायाम् (५।२२) पठ्यन्ते ।

३. 'चषघ' पाठा० ।

मित्याह। छान्दसा अमी जिघर्त्यादिवन्नियत विषयाः[१] ॥२९—३३॥

भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ

क्षीर-तरङ्गिण्यां

स्वादिगणः

५ सम्पूर्णः ।[२]



१. तदुक्तं पतञ्जलिना—घरतिरस्मा अविशेषेणोपदिष्टः । स घृतं घृणा घर्म इत्येवं विषयः । महा० ७।१।६६ ।

२. इति क्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ क्षीरतरङ्गिण्यां स्वादिर्गणः समाप्तः ।

# ॥अथ तुदादिगणः॥

१. तुद व्यथने । इतः कृषान्ताः (६।६) षडनिट उभयपदिनश्च । तुदादिभ्यः शः (३।१।७७), सार्वधातुकमपित् (१।२।४) इति ङित्त्वम्—तुदति, तुदते । तोत्ता । प्रतोदः, तोदः । आच्छीनद्योर्नुम् (७।१।८०) वा—तुदती, तुदन्ती । विध्वरुषोस्तुदः (३।२।३५) खश्—विधुन्तुदः, अरुन्तुदः । वातशुनीतिल (३।२।२८ वा०) इति तिलन्तुदः । क्ते—तुन्नः (द्र० ८।२।४२) । दाम्नीशस (३।२।१८२) ष्ट्रन्—तोत्रम् । पातृतुदि (उ० २।७) इति थक्—तुत्थम् अञ्जनं, धातुविशेषश्च ॥१॥ ५

२. णुद प्रेरणे । प्रणुदति प्रणुदते[1] । नोत्ता । नुदविदोन्दत्रा (८।२।५६) इति वा निष्ठानत्वं—नुत्तः, नुन्नः । ग्लानुदिभ्यां डौ (उ०२।६४)-नौः ॥२॥ १०

३. दिश अतिसर्जने । अतिसर्जनं त्यागः । दिशति, दिशते । क्तिन् (द्र० ३।३।९४)—दिष्टिर्वितस्तिः । ऋत्विग्दधृग् (३।२।५९) इति क्विन्—दिक् । नाम्न्यादिशिग्रहोः (३।४।५८) णमुल्—नामादेशमामन्त्रयते । दिष्टं दैवम् ॥३॥

४. भ्रस्ज पाके । ग्रहिज्यावयि (६।१।१६) इति सम्प्रसारणम्—भृज्जति, भृज्जते । भ्रस्जो रोपधयोरन्यतरस्याम् ( ६।४।४७ )—भ्रष्टा, भर्ष्टा, प्रसारणविषये नेष्यते, मृष्टलुचितालिङ्गात्[2]—भृज्ज्यात् । बभ्रज्ज बभर्ज, वृश्चतिपृच्छतिभृज्जतीनाम् अविशेषः[3] । सनीवन्तर्ध ( ७।२।४९ ) इति वेट्—विभर्जिषति विभ्रज्जिषति, बिभर्क्षति बिभ्रक्षति । व्रश्चभ्रस्ज ( ८।२।३६ ) इति षः—भृष्टः, भृष्टिः । प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च ( उ० १।२८ ) २०

---

१. अत्र धातुवृत्तौ (पृष्ठ २२३) स्वामिनाम्ना उद्धृतः पाठोऽनुसन्धेयः ।

२. काशिकायां (२।२।३१) राजदन्तादिगणे 'मृष्टलुञ्चितम्' पठ्यते वर्धमानस्तु 'मृष्टलुञ्चितम्' इति पठित्वा लक्ष्यमपि निर्दिदेश (गणरत्नमहो० पृष्ठ ६५) ।

३. अत्र 'ग्रहिवृश्चतिपृच्छतिभृज्जतीनामविशेषः' इति भाष्यवचनम् ( ६।१।१७ ) अनुसन्धेयम् । लिपिविशेनेदमबुद्ध्वा 'वृश्चतिपृच्छतिभृज्जतीनाम्' इतोऽग्रे ६।१।१६ सूत्रसंख्या निर्दिष्टा । २५

भृगुः न्यङ्क्वादिः[१] । भ्रस्जिमूसूयुधूभ्यः कित् (तु० उ० २।८०)—भृज्जनम् । ल्युटि (द्र० ३।३।११५) भ्रज्जनम्, भर्जनम् । भ्रस्जिगमि (उ० ४।१६०) इति ष्ट्रन्—भ्राष्ट्रम् ॥४॥

५. क्षिप प्रेरणे । क्षिपति, क्षिपते । अभिप्रत्यतिभ्यः क्षिपः (१।३।
५ ८०) परस्मैपदम्—अभिक्षिपति, प्रतिक्षिपति, अतिक्षिपति । संपृच (३।२।१४२) इति परिक्षेपी । निन्दहिंस (३।२।१४६) इति परिक्षेपकः । त्रसिगृधिधृषिक्षिपेः क्नुः (३।२।१४०)—क्षिप्नुः । भिदादौ (गण० ३।३। १०४) क्षिपा । रक् (द्र० उ० २।१३)—क्षिप्रम् । क्षिपेरनिः किच्च (तु० उ० २।१०७)—क्षिपणिः, क्षिपणी वा । दिवादौ (४।१३) क्षिप्यति ॥५॥

१० ६. कृष विलेखने । कृषति, कृषते । अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् (६।१।५९) अम्—कर्क्ष्यति क्रक्ष्यति । स्पृशमृशकृषतृपदृपः सिज् वा (३।१।४४ वा०)—अकृक्षत्, अक्राक्षीत्, अकार्क्षीत् । भ्वादौ (१।७१७) कर्षति । तत्रैव ग्रहणान्युक्तानि । कृश तनूकरणे तु दिवादिः (४।१२०) तालव्यान्तः ॥६॥

१५ ७. अनुदात्ताः स्वरितेतः

८. ऋषी गतौ, ९. उदात्त उदात्तेत् । ऋषति । उपसर्गादृति धातौ (६।१।९१) वृद्धिरेकादेशः—उपार्षति । अर्षिता । स्नुव्रश्चिकृत्यृषिभ्यः कित् (उ० ३।६६)—ऋक्षः । इक्[२]—ऋषिः । क्तिन् (द्र० ३।३। ९४)—ऋष्टिः । ऋषिवृषिभ्यां कित् (उ० ३।१२३)—ऋषभः । श्वीदितो निष्ठा-
२० याम् (७।२।१४)—ऋष्टः ॥७॥

१०. जुषी प्रीतिसेवनयोः । इतश्चत्वारः सेट आत्मनेपदिनश्च । जुषते । जोषिता । जोषित्वा जुषित्वा (द्र० १।२।२६) । ईदित्वात् (द्र० ७।२।१४) जुष्टः । एतिस्तुशास्वृ (३।१।१०९) इति क्यप्—जुष्यः । सह जुषत इति सजूः ॥८॥

---

२५ १. न्यङ्क्वादिगणे (७।३।५३) भृगुशब्दपाठात् कुत्वमित्यभिप्रायः ।

२. अत्र 'इक् कृष्यादिभ्यः' (३।३।१०८ वा०) इति वार्तिकेन 'इक्' प्रत्यय इति स्वाम्यभिप्रायः । लिबिशेन त्वेतद्वार्तिकमबुद्ध्वा 'इगुपधात् कित्' इति उणादिसूत्रनिदर्शनाय (उ० ४।११९) संख्या निर्दिष्टा । उणादौ न इक् प्रत्ययः साक्षान्निर्दिष्टः । तत्र त्वनुवर्त्यमानस्य इनः कित्त्वमात्रं विधीयते ।

११. ओविजी भयचलनयोः । उद्विजते । विज इट् (१।२।२) इतीडादिः प्रत्ययः कित्—उद्विजिता । करणे हलश्च (३।३।२१) इति घञ्—वेगः । विग्नः । ण्यन्ताद् उद्वेजितः ॥९॥

१२. ओलजी ओलस्जी व्रीडे । लजते । लजिता । लजितः, लग्नस्तु लग्नम्लिष्ट (७।२।१८) इति सक्ते साधुः, लगितोऽन्यः । ईदित्त्वं तर्ह्यनर्थकम्, तस्माल्लगेः (१।५५३) एतत् निपातनम् । अत एव ओन-जीति चन्द्रः[1]—नग्नः । लज्जते । लज्जिता । अनयोस्तुदादौ प्रयोज-नाभावाद् भ्वादौ युक्तः पाठः[2] ॥१०, ११॥ ५

१३. उदात्ता अनुदात्तेतः ।

१४. ओव्रश्चू छेदने । इतः स्फुलान्ताः (५।९४) त्रिंशतं सेटः परस्मैपदिनश्च । ग्रहिज्याव्रयि (६।१।१६) इति सम्प्रसारणम्—वृश्चति । व्रष्टा व्रश्चिता (द्र० ७।२।३५) । मूलवृट् । वृक्णः, षत्वे निष्ठा-देशः सिद्धो वक्तव्यः (८।२।६ वा०) जॄव्रश्च्योः क्त्वि (७।२।५५) इतीट्—व्रश्चि-त्वा । व्रश्चिकृषोः किकन् (तु० उ० २।४०)—वृश्चिकः । स्नुव्रश्चि (उ० ३।६६) इति क्सः—वृक्षः ॥१२॥ १० १५

१५. व्यच संभवे । विचति (द्र० ६।१।१६) । व्यचेः कुटादित्वम-नसि (१।२।१ वा०)—विचिता । नेह—उरुव्यचाः ॥१३॥

१६. व्यज व्याजीकरणे । व्यजति । 'व्याजीकरणे' लिङ्गाद् घञि कुत्वाभावः—व्याजः ॥१४॥

१७. उछि उञ्छे । उञ्छ उच्चयः । उञ्छति । उञ्छिता ॥१५॥ २०

१८. उछी विवासे । विवासोऽतिक्रमः । उच्छति । व्युष्टा रात्रिः ॥१६॥

---

१. मुद्रिते चान्द्रधातुपाठे तु 'ओलजी' इत्येव पठ्यते (६।१००) । सायणो-ऽपि धातुवृत्तौ चान्द्रमते तत्रगर्पञ्चमादिं (ओनजी) मन्यते (धातु ३२६) । क्षीरस्वामी नग्ननग्निकाशब्दव्याख्याने 'ओणजी' इति पठति (द्र० अमरटीका २।१।३९॥२।६।९) । २५

२. चिन्त्योऽयं पाठः । भ्वादौ पाठे शपः पित्त्वादनुदात्तत्वे तास्यनुदात्तेन्-ङिद् (६।१।१८६) इति लसार्वधातुकानुदात्तत्वे धातुस्वरः स्यात् । इह पाठे तु विकरणस्वरेण मध्योदात्तत्वं भवति । अत्र धातुवृत्तिः (पृष्ठ ३२६) अनुसन्धेया ।

१९. ऋछ इन्द्रियप्रलयमूर्तिभावयोः । इन्द्रियाणां प्रलये =मोहे, मूर्तिभावे च । ऋच्छति, समो गम्यृच्छि (१।३।२९) इति तङ्—समृच्छते । इजादेर्गुरुमतोऽनृच्छः (तु० ३।१।३६) इत्याम्—आनर्छ ॥१७॥

२०. मिछ उत्क्लेशे । उत्क्लेशो बाधनम् । मिच्छति । पिछ
५ इति द्रमिडाः—पिच्छाः आचामः ॥१८॥

२१. जर्ज झर्झ चर्छ परिभाषणे । जर्जति । जर्जरः, झर्झरः । चर्छ इति च दुर्गः[1] ॥१९—२१॥

२२. त्वच संवरणे । संवरणम् आच्छादनम् । त्वचति । क्विपि (द्र० ३।२।१८७) त्वक् । अचि (द्र० ३।१।१३४) त्वचः ॥२२॥
१० २३. ऋच स्तुतौ । ऋचति । क्विप् (द्र० ३।२।१७८)—ऋक् । आनर्च, आनृचुः । अर्चिशुचि (उ० २।१०८) इतीसिः—अर्चिः ॥२३॥

२४. उब्ज आर्जवे । आर्जवं स्पृष्टता[2] । उब्जति । उब्जिजिषति, न न्द्राः संयोगादयः (६।१।३) इत्यत्र वक्तव्याद्[3] बो न द्विरुच्यते । समुद्गादिसिद्धत्वाद् बोपधोऽयम्[4], उपध्मानीयोपधत्वे जश्त्वस्या-
१५ सिद्धत्वं स्यात् । भुजन्युब्जौ पाण्युपतापयोः (७।३।६१) । उब्जेर्बले बलोपश्च (उ० ४।१९२) इत्यसुन्—ओजस् ॥२४॥

२५. उद्झ[5] उत्सर्गे । उज्झति । दोपधोऽयम्, लाक्षणिकं

---

१. 'जर्च जर्झ जर्भ झर्ज परिभाषणे—जर्चति, जर्झति, जर्भति । जर्जरः । झर्झति । झर्झरः । चर्चेति दुर्गाः' । इति पाठा० । २. 'स्पष्टता' क्वचिन्नास्ति ।
२० ३. 'बकारस्याप्ययं प्रतिषेधो वक्तव्यः' इति काशिकास्थवार्तिकादित्यर्थः ।

४. अयं भावः—अभ्युद्गः समुद्गः इत्यादिसिद्धये केचिद् दोपधं मन्यन्ते । तत्र अभ्युद्गः समुद्ग इत्यादयस्तु द्व्युपसर्गाद् गमेर्डप्रत्यये संपत्स्यन्ते । ततः बकारोपधोऽयं धातुरित्यर्थः । उब्जेर्बले बलोपश्च इति उणादिसूत्रम् (४।१९२) अपि बोपधत्वे प्रमाणम् । अपरे उपध्मानीयोपधं स्वीकुर्वन्ति, तन्मते दोषमाह—
२५ उपध्मानीयोपधत्वे इति । अत्र हयवरट्-सूत्रस्थं 'शर्षु जश्भावषत्वे' इति वार्तिकं तद्भाष्यं चावलोकनीयम् ।

५. यथा तूत्तरवचनम्—'दोपधोयं, लाक्षणिकं झत्वम्' तथा तु धातुसूत्रे 'उब्झ' इत्येव मूलपाठ इति प्रतीयते ।

चुत्वम् । उज्झिझिषति । ण्यति[1]—मिथोदुष्यौ नदे (३।१।११५)। क्विपि (द्र० ३।२।१७८) उत् ॥२५॥

२६. लुभ विमोहने । विमोहनं व्याकुलीकरणम् । लुभति । तीषुसह (तु० ७।२।४८) इति लोब्धा लोभिता । लुभो विमोहने (७।२।५४) इट्—विलुभिताः केशाः । दिवादौ लुभ गार्ध्ये (४।१२६)—लुभ्यति, लुब्धः ॥२६॥ ५

२७. ऋहि कत्थनयुद्धहिंसादानेषु । ऋहति । अर्हयति । रिह इति द्रमिडाः[2]—रिहति, रेहयति ॥२७॥

२८. ऋफ ऋन्फ हिंसायाम् । ऋफति, ऋम्फति, शे ऋन्फादीनामुपसंख्यानाद् (द्र० ७।१।५९ वा०) अनिदिताम् (६।४।२४) इति नलोपे कृते नुम्, तृन्फादीनाम् (द्र० ७।१।५९) इत्येके[3] ॥२८,२९॥ १०

२९. तृफ तृन्फ तृप्तौ । तृफति तर्फित्वा । तृम्फति, नोपधात् थफान्ताद् वा (१।२।२३) इति वा कित्त्वम्—तृफित्वा तृम्फित्वा । तृप तृन्प इत्येके[4] ॥३०, ३१॥

३०. तुप तुन्प तुफ तुन्फ हिंसायाम् । तुपति, तुम्पति, तुफति तुम्फति । भ्वादौ तुन्प तुन्फ पाठो (द्र० १।२।८८) व्यर्थः[5] । प्रात् तुम्पतौ गवि कर्तरि (६।१।१५८) सुट्—प्रस्तुम्पति गौः ॥३२—३५॥ १५

३१. दृफ दृन्फ उत्क्लेशे ।[6] [दृफति दृम्फति] ॥३६, ३७॥

---

१. 'क्यपि' इति शुद्धः पाठो द्रष्टव्यः ।

२. उद्धृतं धातुवृत्तौ (पृष्ठ ३२९) । २०

३. अयं काशिकायां पाठः । भाष्यपुस्तकेषु क्वचित् 'तृम्पादीनां' क्वचिच्च 'तृम्फादीनां' इत्युभयथा दृश्यते । ऋम्फादीनामिति स्वाम्युक्तः पाठस्तु न क्वचिदुपलभ्यते ।

४. प्रक्रियाकौमुद्यां (भाग २ पृष्ठ २६५) तु 'तथा चाह क्षीरतरङ्गिणीकारः—तृम्प तुम्प चेत्येके' इति पठ्यते । २५

५. नायं व्यर्थः, भ्वादिस्थेऽप्यनुदात्तत्वे धातुस्वरो भवति, तुदादिपाठात्तु विकरणस्वरः (द्र० क्षीरत०६।१२टि०) । [भ्वादिस्थेष्वपि तास्यनुदात्तेत् (६।१।१८६) इति लसार्वधातुकानुदात्तत्वे धातुस्वरो भवति, शपाठात्तु विकरणस्वरः]

६. क्वचित् सूत्रं नास्ति ।

**३२. गुफ गुन्फ ग्रन्थे ।** गुफति, गोफित्वा गुफित्वा । गुम्फति । नोपधात् थफान्ताद् वा (१।२।२३)—गुफित्वा गुम्फित्वा । घञ् (द्र० ३।३।१८,१९)—गुम्फो बन्धः ॥३८, ३९॥

**३३. उभ उन्भ पूरणे ।** उभति । उभौ[1] (द्र० ३।१।१३५) ।
५ उम्भति । उम्भिता । उम्भित्वा ॥४०, ४१॥

**३४. शुभ शुन्भ शोभार्थे ।** अत एव निपातनाच्च शोभा साधुः[2] । शुभति । शुशोभ । शुभम् । अशोभीत् । भ्वादौ (४९८) शोभते, शुशुभे, अशुभत् । रक् (द्र० उ० २।१३) शुभ्रम् । शुम्भति, शुशुम्भ, तृन्फादि (द्र० ७।१।५९ वा०) । भ्वादौ शुन्भ भाषणे हिंसायां
१० च (१।२९२) इत्यर्थभेदात् पाठः[3] । तत्र षोपदेशः, सुम्भति सुम्भनाद्यर्थं इत्येके[4] ॥४२, ४३॥

**३५. दृभी ग्रन्थे ।** दृभति । दृब्धः । अन्दूदृन्भू (उ० १।९३) इति दृन्भूः सर्पः ॥४४॥

**३६. चृती हिंसाग्रन्थनयोः ।** चृतति, चृत्तः । सेऽसिचि कृत (७।
१५ २।५७) इति वेट्—चर्तिष्यति चर्त्स्यति । ईदित्त्वं यस्य विभाषा (७।२।१५) इति निष्ठायाम् इट्प्रतिषेधानित्यत्वार्थम्—पतितः[5], यङ्लुगर्थं वा—चरीचृतः[6] । क्विप् ( द्र० ३।२।१७८ )—चृत् । चर्त्यम् (द्र० ३।१।११०) ॥४५॥

**३७. विध विधाने ।** विधति । असुन् (द०उ० ९।४९) वेधाः ॥४६॥

---

२० १. इगुपधज्ञाप्रीकिरः कः (३।१।१३५) इति कः । नित्यद्विवचनोऽयम् । द्र० महा० १।१।२७।

२. 'शोभेति निपातनात्' (काव्या० ५।२।४१) इति वामनः ।

३. न केवलमर्थभेदः, अपि तु स्वरभेदोऽपि भवति शपि । पूर्वा ( ६।१२ ) टिप्पणी द्रष्टव्या। ४. द्र० क्षीरतरङ्गिणी १।२९२ ।

२५ ५. द्वितीया श्रितातीतपतित (२।१।१४) इति निपातनादिड् इति काशिका (७।२।१५) । मैत्रेयस्तु धावुधातो 'धावितः' इत्युदाहृतवान् ।

६. स्मृतं धातुवृत्तौ (पृष्ठ ३२०) ।

३८. जुन गतौ[1]। जुनति । जुड इति दुर्गः ॥४७॥

३९. मृड सुखने । मृडति । मृडः । मृडमृद (१।२।७) इति क्त्वा कित्—मृडित्वा ॥४८॥

४०. पृड च । पृडति । पर्डित्वा ॥४९॥

४१. पृण प्रीणने । पृणति । के । (द्र० ३।१।१३५) पृणः । ५ लोकस्य पृणे (६।३।७०), लोकं पृणतीति मुम्—लोकम्पृणः ॥५०॥

४२. मृण हिंसायाम् । मृणति, मृणालम् (द्र० उ० १।११८) ॥५१॥

४३. तुण कौटिल्ये । तुणति । तुन्दम्[2] ॥५२॥

४४. पुण कर्मणि शब्दे च[3]। पुणति । पुण्यम् । के (द्र० ३।१।१३५) निपुणः ॥५३॥ १०

४५. मुण प्रतिज्ञाने । मुणति ॥५४॥

४६. कुण शब्दोपकरणयोः । कुणति । इगुपधात् कित् (उ० ४।११०)—कुणिः कुपाणिः । क्त्रादिभ्यः कित् (उ० १।११५)—कुण्डम् । उणादौ कुणिन्दः (द्र० उ० ४।८४), कुणालम्[4], कुणपः[5] । कोणः ॥५५॥

४७. शुन गतौ । शुनति । शुनकः । श्वा—श्वन् (द्र० उ० २।३२) १५ शुनश्च सीरं च—शुनासीरः ॥५६॥

---

१. स्मृतं धातुवृत्तौ (पृष्ठ ३३०) ।

२. अब्दायश्च (उ० ४।९८) इति निपातनात् ददनौ प्रत्ययौ । उज्ज्वलदत्तस्त्वेतत्सूत्रवृत्तौ 'तुन्देर्नुम् च, तुन्दः' इत्याह । तच्चिन्त्यम् । नहि 'तुन्दिः' धातुः क्वचित् पठ्यते । यद्वाऽत्र 'तुदेः' इति पाठः स्यात् । तथाप्ययुक्तता तदवस्थैव । २० तुदेर्नुमि दे दनि वा प्रत्यये 'तुन्द्द' इति लक्ष्यविरुद्धं प्राप्नोति । झरो झरि सवर्णे (८।४।६५) इति लोपेऽपि पक्षे दकारद्वयं प्राप्नोत्येव, न चेष्यते । ३. सार्वत्रिकः पाठः ।

४. इतोऽग्रे लिबिशेन पञ्चपाद्युणादेः ३।७६ सूत्रसंख्या निर्दिष्टा । तस्मिंश्च सूत्रे कण-धातोः सम्प्रसारणं कालंश्च प्रत्ययो विधीयते, न कुण-धातोः । सरस्वतीकण्ठाभरणे (२।३।१०१) कुणेरेव कालन् विधीयते । २५

५. अत्रापि लिबिशेन उणादेः ३।१४३ सूत्रसंख्या निर्दिष्टा । अस्मिन्नपि

**४८. द्रुण हिंसागतिकौटिल्येषु ।** द्रुणति । के (द्र० ३।१।१३५) द्रुणः । घञ् (द्र० ३।३।१८)—द्रोणः, द्रोणी ॥५६॥

**४९. घुण[1] घूर्ण भ्रमणे ।** घुणति, घुणो दारुक्रिमिः । घोणा । घूर्णतिः । घूर्णती घूर्णन्ती (द्र० ७।१।८०) । भ्वादौ (१।२९५) घोणते, घूर्णते ॥५८, ५९॥

**५०. सुर ऐश्वर्यदीप्त्योः ।** सुरति । सुरः । षोपदेशोऽयमिति दुर्गः—सुषोर ॥६०॥

**५१. कुर शब्दे ।** कुरति । कोरकम् । कुरः करन्[1]—कुररः । कुर्यात् (द्र० ७।२।७९) । कुरुः ॥६१॥

**५२. क्षुर खुर विलेखने ।** विलेखनं छेदः । क्षुरति । क्षुरः । खुरति । खुरः ॥६२, ६३॥

**५३. मुर संवेष्टने ।** मुरति । मुरः, मुरा ओषधिविशेषः । मुर्मुरः ॥६४॥

**५४. घुर भीमार्थशब्दयोः ।** घुरति । घञ् (द्र० ३।३।१९)—घोरः । घुर्घरः ॥६५॥

**५५. पुर अग्रगमने ।** पुरति । पुरम् । क्विप् (द्र० ३।२।१७८)—पूः । पुरुषः । पुरु बहु ॥६६॥

**५६. बृहु[2] उद्यमे ।** उद्यम उद्धरणम् । बृहति । बर्हिता । बर्ढा । उद्बर्हः । बर्हणम् । बर्हः । प्रभौ परिबृढः[3] (७।२।२१) । भ्वादौ बृह वृद्धौ (१।४८५)—बर्हति ॥६७॥

---

सूत्रे कर्णेरेव संप्रसारणं कपश्च प्रत्ययो विधीयते, न कुर्णेः । सरस्वतीकण्ठाभरणे (२।२।११२) तु कुर्णेरेव कुणपो निपात्यते ।

१. द्र० सर० कण्ठा० २।३।३६॥ हैमोणादि ३६६ ।

२. अन्ये तु वकारादिं पठन्ति । धातुवृत्ति पृष्ठ ३३१ ।

३. अत्र भ्वादौ चोभयत्र पवर्गादिं पठित्वा 'प्रभौ परिबृढः' सूत्रेण दन्त्योष्ठ्यवान् 'परिवृढ' शब्दो व्युत्पाद्यते । तत्कथमिति न जानीमः । किमस्मिन् सूत्रेऽपि पवर्गवान् एव पाठः स्वामिसम्मतः ?

५७. तृहू तृन्हू स्तृहू स्तृन्हू हिंसायाम्[1] । तृहति । तर्हिता, तर्ढा । तर्हणम् । रुधादौ तृहि हिसि हिंसायाम् (७।२४) तृणेढि, तृण्ढः, तृंहन्ति । तृंहति । तृंहिता, तृण्ढा । स्तृहति, स्तृंहति । षोपदेशाविति दुर्गः ॥६८—७१॥

५८. इषु इच्छायाम् । इषुगमियमां छः (७।३।७७)—इच्छति । ५
तीषुसह (तु० ७।२।४८) इति वेट्—एष्टा एषिता । इष्यन इतीट्, इषे त्वोर्जे त्वा (माध्य० सं० १ १) । विन्दुरिच्छुः (३।२।१६९) । इष आश्वयुजः, इट् अन्नम् अस्यास्त्यत्र वा, अर्शआद्यच् ( ५ । २ । १२७ ) । इष्यशिभ्यां तकन् ( उ० ३।१४८ )—इष्टका । क्षुरिष्वेषेः (द० उ० १।१५४)—इक्षुः । इच्छा (३।३ १०१) साधुः । श्रुयजीषिस्तुभ्यः करणे (तु० १०
३।३।९५ वा०)—इष्टिः । इष्टः । दिवादौ इष गतौ ( ४।१७ )-अन्विष्यति, इषुः । क्र्यादौ इष आभीक्ष्ण्ये (९।५७) इष्णाति ॥७२॥

५९. मिष स्पर्धायाम् । मिषति । मेषिता मेषोऽचि (द्र० ३।१।१३४), के (द्र० ३।१।१३५) आमिषम् । घञ् (द्र० ३।१।१८, १९)—निमेषः ॥७३॥

६०. किल श्वैत्यक्रीडनयोः । किलति । केलिः । के (द्र० ३ । १ । १३५ ) किलकिला रवः, अव्यक्तानुकरणं वा । किलासं[2] सिध्मम् ॥७४॥ १५

६१. तिल स्नेहने । तिलति । के (द्र० ३।१।१३५) तिलः । चुरादौ (१०।६२) तेलयति ॥७५॥

६२. चिल वसने । चिलति । पचादौ (गण० ३।१।१२४) चेलः चेलम्, चेलट्[3] (गण० ३।१।१३४), गर्हिता ब्राह्मणी = ब्राह्मणि- २०

---

१. 'क्षीरस्वामी तु—तृहू तृन्हू ष्टृहू ष्टृन्हू हिंसार्थाः' इत्येवं पुरुषकारे (पृष्ठ १२१) उद्ध्रियते । तत्र षोपदेशपाठश्चिन्त्यः ।

२. द्र० सरस्वतीकण्ठाभरण २।३।१७७; हैमोणादि ५७५ ।

३. स्त्रीत्वनिदर्शनाय पचादौ पठितं टित्पाठं निर्दिशति । इह लिबिशेन ६।३।४३ सूत्रसंख्या निर्दिष्टा, सा चिन्त्या । एषा सूत्रसंख्या तु 'घरूपकल्प' इत्युत्तरं निर्देष्टव्या सतीह निर्दिष्टा । २५

चेली, घरूपकल्प (६।३।४३) इति ह्रस्वः, चेलखेटकटुकक्काण्डं गर्हायाम् (६।२।१२६) इत्युत्तरपदाद्युदात्तत्वम्[1] ॥७६॥

६३. चल विलसने । चलति । चलती, चलन्ती । चल कम्पने ज्वलादिः (१।५६९)—चलः, चालः । शप्श्यनोर्नित्यम् (७।१।८१) नुम्—
५ चलन्ती । कम्पने चलिः (१।५४९) मित्—चलयति लताम् । चुरादौ चल भृतौ (१०।६३)—चालयति ॥७७॥

६४. विल संवरणे । दन्त्योष्ठ्यादिः । विलति । आविलम्[2] वेला ॥७८॥

६५. इल स्वप्नक्षेपणयोः[3] । इलति । इला भूः । एला ।
१० एलयति ॥७९॥

६६. बिल भेदने । बिलति । बिलातः । आबिलम् । बिल्मम् । बिल्वम् ॥८०॥

६७. णिल गहने । प्रणिलति ॥८१॥

६८. हिल हावकरणे[4] । हिलति । हेला[5] । मिल[6] श्लेषण इति
१५ दुर्गः—मिलति[3], मेलः ॥८२॥

६९. शिल षिल उञ्छे । शिलति । शिलम् । शिला । सिलम् । सेलु श्लेष्मातकः ॥८३, ८४॥

७०. लिख अक्षरविन्यासे । लिखति । आलेख्यम् । पचादौ (गण० ३।१।१३४) लेखः । घञ्—लेखः, विलेखः । भिदादौ (गण०
२० ३।३।१०४) लेखा ॥८५॥

---

१. 'उत्तरपदान्तोदात्तत्वम्' पाठान्तरं, तच्चिन्त्यं, सूत्रार्थविरोधात् ।

२. 'आविलम्' हस्तलेखपाठः ।     ३. 'स्वप्नप्रक्षेपणयोः' पाठा० ।

४. 'भावकरणे' पाठा० ।     ५. भिदादावस्य पाठः कल्प्यः ।

६. पूर्वत्र 'मील'धातुव्याख्याने (१।३४५) 'लौकिकास्मिलेः मिलति,
२५ मेलनम्' इत्युक्तं स्वामिना । तदिहान्वेष्यम् । दीपजन (७।४।३) सूत्रे मील-धातुं पठता पाणिनिना मिल-धातुर्न स्वीक्रियत इति ज्ञाप्यते । अन्यथा मीलतेरमिमीलत् मिलतेरमीमिलत् इति रूपद्वयं स्यादेव, किमुपधाह्रस्वविकल्पेन । दुर्गोपजीव्ये काशकृत्स्न-धातुपाठेऽपि 'मिल श्लेषणे' (पृष्ठ २२७) पठ्यते ।

७१. कुट कौटिल्ये । कुटति । गाङ्कुटादिभ्योऽञ्णिन्ङित् (१।२।१)—कुटिता । उत्कुटः । कुटो घटः । कोटरः । कुटरः । कोटिः । कुटीरम् । उषिकुटि (उ० ३।१४२) इति कपन्—कुटपोऽन्नमानम् । इगुपधात् किः (तु० उ० ४।१२०)—कुटिः । कुटिकुषिभ्यां क्मलन् (उ० ४।१८७) —कुट्मलम् । कुटिलः । कथं कुटित्वा ? न क्त्वा सेट् (१।२।१८) इति हि कित्त्वं बाधितम्, न ङित्त्वम् ॥८६॥ ५

७२. पुट संश्लेषणे । पुटति । पुटः, पुटी । घञ्—पोटा नपुंसकम् । पोटकः । चुरादौ पुट संचूर्णने (१०।६८), तथा भासार्थः (१०।१९७)—पोटयति । लुट विलोडन[1] इति दुर्गः—लुटति । लुटिता । लुटित्वा । लुठ संश्लेषण इत्येके[2] ॥८७॥ १०

७३ कुच संकोचने । संकुचति, अर्थे संग्रहणात् तदुपसर्गत्वम्[3] । संकुचिता । कुचित्वा । कुचौ । भ्वादौ संपर्चनादौ (१।६००) संकोचति ॥८८॥

७४. गुज शब्दे । गुजति, गुजिता । भ्वादौ (१।१२३ एकीयमते) गोजति, गोजिता ॥८९॥ १५

७५. गुड रक्षायाम् । गुडति । गुडा हस्तिसंनाहः । गुडः स्वादुद्रव्यम् । भूगोल[4]ः, गोलकं[4] युग्मम्, गुलिका[4] मौक्तिकविशेषः ॥९०॥

७६. डिप क्षेपे[5] । डिपति, डिपिता । दिवादौ (४।१२४) डिप्यति, डेपिता । चुरादौ (१०।१२३) डेपयति ॥९१॥ २०

७७. छुर छेदने । छुरति । आच्छुरितम् । छुर्यात्, र्वोः न भकुर्छुराम् (तु०८।२।७९) इति दीर्घो नास्ति—छुरिका ॥९२॥

१. 'लोटने' पाठा० । कातन्त्रधातुपाठे 'पुट लुट संश्लेषणे' इति पाठः, काशकृत्स्ने 'पुट लुठ संश्लेषणे' (पृष्ठ २२७) ।

२. एतत्पृष्ठस्था प्रथमा टिप्पणी द्रष्टव्या । २५

३. द्रष्टव्यं (६।१०४) धातुसूत्रव्याख्यानम् ।

४. डलयोरेकत्वस्मरणात् । अत्र ५१ पृष्ठस्था टि० १ द्रष्टव्या ।

५. 'प्रक्षेपे' पाठा० ।

७८. स्फुट विकसने । स्फुटति, स्फुटिता । अस्फुटीत् । स्फुटः । भ्वादौ स्फुटिर् विशरणे (१।२२६)—स्फोटति, स्फोटिता, अस्फुटत्, अस्फोटीत् । स्फोटः ॥९३॥

७९. मुट आक्षेपप्रमर्दनयोः । मुटति । मुटिता । भ्वादौ ५ (१।२२१ दुर्गमते) मोटति, विमोटितकराङ्गुलिः । चुरादौ (१०। ६७ दुर्गमते) मोटयति ॥९४॥

८०. त्रुट छेदने । वा भ्राशभ्लाश (३।१।७०) इति श्यन् वा—त्रुट्यति त्रुटति । त्रुटिता । त्रोटयति ॥९५॥

८१. तुट कलहकर्मणि । तुटति, तुटिता । इक्[1] (द्र० ३।३।१०८ १० वा०)—तुटिः । तोटकम् ॥९६॥

८२. चुट छुट छेदने । चुटति । उच्चोटनम् । छुटति । छोटिका ॥९७, ९८॥

८३. जुड बन्धे । जुडति । जुडिता । जुड गतौ (६।३८ दुर्गमते) —जुडति, जोडिता ॥९९॥

१५ ८४. कड घसने[2] । घसनं भक्षणम् । कडति । कड्यते । कलमः[3] । कडङ्गरो बुसम् । कलिः । कलहः । कडत्रम्, कलत्रम् । भार्या नितम्बश्च । कडित्रं दूतं लेखनचर्म च । कुटादौ फलाभावात् यूथभ्रष्टोऽयम्[4] ॥१००॥

---

१. 'इक् कृष्यादिभ्यः' इति वार्तिकेन इति भावः । लिबिशेन वार्तिकम्- २० बुध्वा 'इगुपधात् कित्' इत्युणादिसूत्रस्य ४।११६ संख्या निर्दिष्टा ।

२. काशकृत्स्ने धातुपाठे तु 'कड मदे, क्रुड घसने' इति पठ्यते (पृष्ठ २२६)।

३. उणादौ (४।८४) कलधातोः कलमो व्युत्पाद्यते । हैमोणादौ तु कडेरेव (द्र० ३४७) अत्र उत्तरेषु च केषुचित् शब्देषु डलयोरभेदात् लत्वं बोध्यम् ।

४. तुदादौ पाठस्तु स्वरार्थः सम्भवति, परन्तु कुटादावस्य पाठश्चिन्त्य- २५ प्रयोजन एव । काशकृत्स्ने (पृष्ठ २२६) धातुपाठे 'कुड मदे' इति पठ्यते । काशकृत्स्नो भ्वादावपि (पृष्ठ २३) इमं पठति । तदनुयायी कातन्त्रकारस्तु केवलं भ्वादावेव पठति, न तुदादौ । स्वाम्यपि 'कडि मदे' (१।२५१) सूत्रव्याख्याने 'कड इति दुर्गः' इत्येवं स्मरति ।

८५. कुड बाल्ये । कुडति कुडः । कुडङ्गः ॥१०१॥

८६. क्रुड घनत्वे । घनत्वं सान्द्रता । क्रुडति ॥१०२॥

८७. गुड प्रतिघाते[1] । गुडति । अयोगुडः । घुट इति दुर्गः—घुटिका गुल्फास्थि[2] ॥१०३॥

८८. तुड तोडने । तोडनं भेदः पृथक्करणं वा । तुडति । ५ तोडः, तोडनम्, तुडिः ॥१०४॥

८९. स्थुड थुड संवरणे । स्थुडति । स्थुलः पटकुटिः । थुडति ॥१०५,१०६॥

९० दुड हुड निमज्जने । दुडति । दोडः, दोला । हुडति । होडिः, हुडः, हुडुः । क्रुड इत्येके[3] ॥१०७,१०८॥ १०

९१ व्रुड भ्रुड संवरणे । व्रुडति, भ्रुडति ॥१०९,११०॥

९२. स्फर स्फुर स्फल स्फुल चलने । स्फरति । स्फरः । स्फारः । स्फायि (उ०२।१३) इति स्फाये रक् । स्फुरति । स्फुरः स्फोटकः । स्फलति । आस्फालः, आस्फालना । स्फुरतिस्फुलत्योर्निर्निविभ्यः (८।३।७६) षत्वं वा—निःस्फुरति, निःष्फुरति । चिस्फुरोर्णौ (६।१।५४) वात्त्वम्— १५ विस्फारयति, विस्फोरयति । स्फुरितम् । स्फुरिस्फुल्योर्घञि (तु० ६।१।४७) वात्त्वम्—स्फारः स्फोरः, स्फालः स्फोलः । इत्थं चोभौ प्रमादादाम्नातौ[4] ॥१११—११४॥

---

१. अन्यत्र क्षीरतरङ्गिण्यां प्रायेण 'प्रतीघाते' इति पठ्यते ।

२. इतोऽग्रे 'मन्त्रसिद्धौ प्रतिबन्धः' इत्यधिकः पाठः क्वचित् । २०

३. काशकृत्स्ने धातुपाठे 'क्रुड घसने' इति पठ्यते (पृ० २२९)[°] ।

४. वस्तुतो नोभौ प्रमादाम्नातौ । अपि तु स्फारस्फोरयोः स्फालस्फोलयोश्च स्वतन्त्रे पृथक् प्रकृती इति बोधनायैव कैश्चित् प्राचीनमतमाश्रित्योभयथा पठितौ । सूत्रपाठे तु आत्त्वं विकल्प्यैकस्मादेव धातो रूपद्वयं निष्पादितम् । रलयोरभेदत्वमाश्रित्य स्फुरस्फुलयोरप्येकतरेणैव कार्यं सिद्ध्यति । जैनशाकटानश्च 'स्फल चपले स्फुल २५ संचये च' (धातुसूत्र ६६७,६६८) रलयोरभेदं मत्वाऽद्गुपधमुकारोपधं चोभयथा पठति ।

९३. स्फुल संचये च । स्फुलति स्फुलिङ्गः ॥

९४. उदात्ता उदात्तेतः ।

९५. गुरी उद्यमे । ९६. उदात्तोऽनुदात्तेत् । गुरते, गुरिता, गूर्णः । अपगुरो णमुलि (६।१।५३ ) वास्वम्—अपगारम् अपगारम्, अपगोरम् अपगोरम् । चुरादौ (१०।१४३) आगूरयते गूरेः ॥११५॥

९७. णू स्तवे । इतश्चत्वारः सेटः । प्रणुवति । नुविता । नूतः श्युकः किति (७।२।११) इतीण् नास्ति, अन्ये नुवित इत्याहुः, ङित्वेन कित्त्वस्य निवर्तनात् । एवं धूत-धुवितादयः ॥११६॥

९८. धू विधूनने । धुवति । स्वादौ (५।९) धूनोति धुनोति[1] । क्र्यादौ (९।१६) धुनाति ॥११७॥

९९. गू पुरीषोत्सर्गे । गुवति, गुविता । तिथपृष्ठगूथ (उ० २।१२) इति गूथम् । भ्वादौ (१।६।७९) गवति[2] ॥११८॥

१०० ध्रु[3] गतिस्थैर्ययोः । ध्रुवति । अचि (द्र० ३ १।१३४) ध्रुवः । ध्रुविता । ध्रुतः ध्रुवितः । भ्वादौ (१।६७४) स्थैर्ये-ध्रवति ॥११९॥

१०१. उदात्ताः ।

१०२. कुङ् शब्दे । इतः समानिटः । कुवते । कुता । कुङ् इत्येके[4]—आकुविता, आकूनम् ॥१२०॥

१०३. वृत् । कुटादयो वर्तिताः ।

१०४. पृङ् व्यायामे । व्यायाम उद्योगः । व्याप्रियते, वृत्तौ[5] विग्रहणात् । व्यापृतः । व्यापारः ॥११९॥

---

१. स्वादौ पक्षान्तरे 'धुञ्' इत्यपि पठति स्वामी ।

२. भ्वादौ ङित्वाद् 'गवते' इति युक्तम् । क्वचिन्नास्ति ।

३. अत्राह धातुवृत्तिकारः—'स्वाम्यादयः ध्रुव इति वकारान्तं धातुं पठन्ति' इति (पृष्ठ २३६) । न चात्र तथा पाठ उपलभ्यते ।

४. सस्मार धातुवृत्तिकारः (पृष्ठ २३६) ।

५. वृत्तौ धात्वर्थे इत्यर्थः । द्र० ६।७३ धातुसूत्रव्याख्यानम् ।

१०५. मृङ् प्राणत्यागे । म्रियते । म्रियतेर्लुङ्लिङोश्च (१।३।६१) इति तङ्—अमृत, मृषीष्ट । अत एव वा ङित्त्वं पेठुः[1]। ममार । मरिष्यति। मारः । मारकः । अभिमरस् तैक्ष्ण्ये[2] । मर्म । मर्मरः, पचादौ (द्र० ३।१।१३४) अमरः । भुजिमृङ्भ्यां युक्त्युकौ च (तु० उ० ३।२१)—मृत्युः भृमृशी (उ० १।७) इत्युः—मरुः । मृग्रोरुतिः (उ० १।९४)—मरुत् । मृकणि-भ्यामीचिः (उ० ४।७०) -मरीचिः । मरूको निर्दशनः करी[3] । हसिमृग्र (उ० ३।८६) इति तन् मर्तः, स्वार्थे यः (द्र० ५।४।३६ वा०) मर्त्यः ॥१२०॥ ५

१०६. रि पि गतौ । रियति, पियति । पिकः कोकिलः। ॥१२१,१२२॥

१०७. धि धारणे । धियति । धेता ॥१२३॥ १०

१०८. क्षि निवासगत्योः । क्षियति । क्षेता । क्षय्यजय्यौ शक्यार्थे (६।१।८१)—क्षय्यः, क्षेयोऽन्यः । निष्ठायामण्यदर्थे (६।४।६०) दीर्घः, क्षियो दीर्घात् (८।२।४६) नत्वम्—क्षीणः । वाक्रोशदैन्ययोः (६।४।६१)—क्षीणायुर्जाल्मः; क्षितायुः, क्षीणस्तपस्वी, क्षितः। अर्तिस्तुसु (उ० १।१४०) इति मन्—क्षेमम् । ष्ट्रन् (उ० ४।१५८) क्षेत्रम् । क्षितिः । एरच् (३।३।५६) १५ क्षयो गृहम् । भिदादौ (गण ३।३।१०४)क्षिया । स्वादौ(५।३२ एकीयमते) क्षिणोति । भ्वादौ (१।१४९) क्षयति ॥१२४॥

१०९. अनुदात्ताः ।

११०. षू प्रेरणे । सुवति । उपसर्गात् सुनोतिसुवति (८।३।६५) इति षत्वम्—अभिषुवति । सविता । सोषूयते । सुसूषति स्तौतिण्यो-२० रेव षणि (८।३।६१) इति नियमात् षत्वं नास्ति ॥१२७॥

१११. कॄ विक्षेपे । किरति । किरतेर्हर्षजीविका (१।३।२१ वा०) इति तङ्, अपाच्चतुष्पाच्छकुनिष्वालेखने (६।१।१४२) सुट्—अपस्किरते

१. अस्पष्टार्थमिदं वचनम् । ङित्त्वप्रयोजनायात्र माधवीया धातुवृत्तिर्द्रष्टव्या (पृष्ठ ३३७) । २५

२. ये जनपदे शूरास्त्यक्तात्मानो हस्तिनं व्यालं वा द्रव्यहेतोः प्रतियोधये-युस्ते तीक्ष्णाः । कौटिल्य० १।१२॥ अत्र ३।३।५३ क्षीरस्वामिनोऽमरटीका द्रष्टव्या ।

३. तुलनीयम्—'मरूको मयूरो मृगो निदर्शनेमस्तृणं च' इति हैमोणादि-वृत्तिः (५८) ।

वृषभो हृष्टः, अपस्किरते कुक्कुटो भक्षार्थी, अपस्किरते श्वाश्रयार्थी। किरतेर्लवने (तु० ६।१।१४०) सुट्—उपस्कारं[1] मद्रका लुनन्ति। हिंसायां प्रतेश्च (६।१।१४१)—उपस्कारस्ते[2] जाल्म भूयात्, प्रतिस्कारः। मरणमस्त्विति। प्रतिचस्करे नखैः (शिशुपालवध १।४७)। किरश्च पञ्चभ्यः

५ (७।२।७५) सनीट्, अस्येटो वृतो वा (७।२।३८) इति दीर्घो नेष्यते[3] (द्र० ७।२।७५ काशिका)—चिकिरिषति, पक्षे चिकीर्षति[4]। इगुपध (३।१।१३५) इति कः—किरः सूकरः, किरिश्च (द्र० उ० ४।१४३)। विष्किरः शकुनिर्विकिरो वा (६।१।१५०) कॄपॄवृजि (उ० २।८१) इति क्युः—किरणः। कॄशृशलि (उ० ३।१२२) इत्यमः—करभः। कॄवृदारिभ्य

१० उनन् (द० उ० ५।५२)—करुणः, करुणा कृपा। कॄतॄभ्यामीषन् (उ० ४।२६)—करीषः शुष्कगोमयम्। कॄशॄपॄकटि (उ० ४।३०) इलीरन्—करीरम् अङ्कुरः। कॄगॄभ्यां किः (तु० उ० ४।१४२)—किरिः। कॄगॄकपिभ्यः कीटन् (तु० उ० ४।१८५) किरीटम्। कॄवॄजॄसि (तु० उ० ५।४२) इति नः—कर्णः श्रोत्रम्। कॄमोरुच्च (द्र० उ० १।१०९)—कुरुर्देशः। कॄगॄशॄपॄवृञ्-

१५ चतिभ्यः ष्वरच् (द० उ० ८।४७ कपाठः)—कर्वरः। कॄ धान्ये (३।३।३०) इति घञ्—उत्कारो धान्यस्य, निकारः; अन्यत्रोत्करः, निकरः। वर्चस्केऽवस्करः (६।१।१४८), अवकरोऽन्यः ॥१२८॥

**११२. गॄ निगरणे।** निगरणं गिलनम्। गिरति, गिलति—अचि विभाषा (८।२।२१) इति लः। ग्रो यङि (८।२।२०) इति जेगिल्यते।

२० गरिता[5]। जिगरिषति जिगीर्षति[6], अवाद् ग्रः (१।३।५१) तङ्—अव-

---

१. 'अपस्कारम्' पाठा०। २. 'अपस्कारस्ते' पाठा०।

३. भागवृत्तौ त्वस्यापि दीर्घविकल्प उक्तः। द्र० अस्मदीये भागवृत्तिसंकलने ७।२।७५ सूत्रम्।

४. किरश्च पञ्चभ्यः (७।२।७५) इति तु कॄ गॄ धात्वोः 'इट् सनि वा'

२५ (७।२।४१) इति विकल्पे प्राप्ते नित्यमिटं विधत्ते। तदाह वृत्तिकृत्—किरतिगिरत्योरिट् सनि वेति विकल्पः प्राप्तः (७।२।७५) इति। तेनात्र पक्षे इडभावप्रदर्शनं चिन्त्यम्।

५. वृतो वा (७।२।३८) इति इटो वा दीर्घो भवति। तेन गरिता गरीता इत्युभयं साधु। ६. द्र० एतत् पृष्ठस्था ४र्था टिप्पणी।

गिरते। अवजिगरिषते। वृतो वा (७।२।३८) नास्ति[1]। समः प्रतिज्ञाने (१।३।५२) तङ्—संगिरते। निगरणचलनार्थेभ्यश्च(१।३।८७)—निगारयति। पचादौ (गण ३।१।१३४) गरः, अजगरः। श्वपचचक्रधरवद् अकाराद् अनुपपदात्, कर्मोपपदे विप्रतिषेधेन (द्र० १।४।२) इत्यण् (द्र० ३।२।१) प्राप्तः। उन्न्योर्ग्रः (३।३।२६)—उद्गारः, निगारः। अप् (द्र० ३।२।५७)—गरः, गलः। बाहुलकाद्[2] घञ्—निगारः, निगालः। न गारः—अगारम्। मृग्रोरुतिः (उ० १।६४)—गरुत् पक्षः। गर्मुत् (द्र० उ० १।९५) तृणम्। हसिमृग्रि (उ० ३।८७) इति तन्—गर्तः। कॄगॄभ्यां किः (तु० उ० ४।१४२)—गिरिः। मुदिग्रोर्गग्गौ (उ० १।१२८)—गर्गः। अर्तिगॄभ्यां भन् (उ० ३।१५२)—गर्भः। शेवायह्व (उ० १।१५४) इति ग्रीवा ॥१२९॥

११३. उदात्ताः।

११४. दृङ् आदरे, ११५. धृङ् स्थाने। ११६. अनुदात्तौ। आदर इत्याग्रहणाद्—आद्रियते। आदर्ता। आदिदरिषते। एतिस्तुशासु (३।१।१०९) इति क्यप्—आदृत्यम्। हृति[3] भेत्त्वा। ण्यन्तात् पूःसर्वयोर्दारिसहोः (३।२।४१) खच्—पुरन्दरः। ग्रहवृदृ (३।३।५८) इत्यप्—आदरः। दरिदलिभ्यां भः (तु० उ० ३।१५१)—दर्भः। ध्रियते। धर्ता दिधरिषते। अन्यानि भ्वादौ (६८४ सूत्रे) ग्रहणानि धरते ॥१३०,१३१॥

११७. प्रछ ज्ञीप्सायाम्। ज्ञीप्सा[4] जिज्ञासा। इतः षड्लपर्यन्ताः (६।१३०) पञ्चदशानिटः परस्मैपदिनश्च। ग्रहिज्यावयि (६।१।१६) इति सम्प्रसारणम्—पृच्छति। समो गम्यृच्छिप्रच्छि (१।३।२९ का०) इति तङ्—संपृच्छते। आङि नुप्रच्छ्योः (१।३।२१ वा०) तङ्—आपृच्छते। पिपृच्छिषति—रुदविद (१।२।८) इति कित्। पृष्ट्वा। क्विब्वचि (३।२।१७८ वा०) इति शब्दग्रहात्, प्राड्विवाको निर्णेता। न्यङ्-

1. द्र० पूर्वपृष्ठस्था ४ टिप्पणी

2. 'कृत्यल्युटो बहुलम्' (३।३।११३) इति बहुलग्रहणात् 'वासरूपोऽस्त्रियाम्' (३।१।९४) इति नियमादप्राप्तो घञपि भवति इति भावः। लिबिश इममर्थमबुद्ध्वा बहुलमेतन्निदर्शनम् इति धातुसूत्रनिदर्शनाय १०।३६२ संख्यां निर्दिष्टवान्।

3. द्र० उ० ४।१८४। 4. 'ज्ञातुमिच्छा' पाठा०।

क्त्वादित्वात् (द्र० ७।३।५३) कुत्वम्[1]। यजयाचयत (३।३।९०) इति नङ्— प्रश्नः, छ्वोः शूडनुनासिके च (६।४।१९)[2] प्रच्छेरनङि[3] इति सम्प्रसारणाभावः ॥१३२॥

११८. वृत्। किराद्यः पञ्च वर्तिताः।

५ ११९. सृज विसर्गे। सृजति। स्रष्टा, व्रश्चभ्रस्ज (८।२।३६) इति षः। सृजियुजिधूञां कर्मवद्भावः श्यंश्च (तु० ३।१।८७ वा०)—सृज्यति रज्जुः स्वयमेव। विभाषा सृजिदृशोः (७।२।६५) थलीट्—ससर्जिथ, सस्रष्ठ। सृजिदृशोर्झल्यमकिति (६।१।५८) इत्यमि कृते वदव्रज (७।२।३) इति वृद्धिः— अस्राक्षीत्। उणादौ (द्र० उ० १।१५) रज्जुः ॥१३३॥

१० १२०. टुमस्जो शुद्धौ। शुद्ध्या स्नानं ब्रुडनं च लक्ष्यते। मज्जति। मस्जिनशोर्झलि (७।१।६०) इति नुम्—मङ्क्ता। जान्तनशां विभाषा (६।४।३२) क्त्वायां नुम्[4]—मङ्क्त्वा मक्त्वा। ओदितश्च (८।२।४५) इति नत्वम्—मग्नः। मज्जथुः (द्र० ३।३।८९)। गुरोश्च हलः (३।३।१०३)-मज्जा-मज्जनम्। श्वनुक्षन् (उ० १।१५९) इति मज्जाऽस्थिसारः। भृमृशीतॄ (तु० १५ १।७) इत्युः—मद्गुः, न्यङ्क्वादित्वात् (गण० ७।३।५३) कुत्वम्। मस्जेर्नुम् च (उ० १४।७७) इत्यूषन्—मञ्जूषा पेटा[5] ॥१३४॥

१२१. रुजो भङ्गे। रुजति। रुग्णः। पदरुज (३।३।१६) इति कर्तरि घञ्—रोगः। भिदादौ (गण० ३।३।१०४) रुजा। रुक्। उदि कूले रुजिवहोः (३।२।३१) खश्—कूलमुद्रुजः। नहिवृति[6] (६।३।११६) इति दीर्घः २० —वीरुक्। रुक्मं रुचेः (द्र० १।४९४) ॥१३५॥

---

१. नात्र कश्चित् कुत्वभात्री, अतोऽस्थानेऽस्य पाठः। अत्र त्वग्रिमः—'छ्वोःशूडनुनासिके च' (६।४।१९) इति पाठोऽपेक्ष्यते, शब्दप्राट्-शब्दे षत्वार्थम्।

२. प्रश्नपदानन्तरं सूत्रमिदमनर्थकम्। पूर्वनिरुक्ते शब्दप्राट्-शब्दे तस्यावश्यकत्वात् तत्र नेयः। लिपिकेशेन नैषा पाठस्य स्थानभ्रष्टता बुद्धा।

२५ ३. कस्य तन्त्रस्येदं सूत्रमिति नैव परिज्ञातमस्माभिः। पाणिनीयास्तु 'प्रश्ने चासन्नकाले'(३।२।११७)इति निपातनात् संप्रसारणाभावमाहुः। द्र०काशिका ६।१।१६॥

४. नैतत् सूत्रं क्त्वायां नुमो विकल्पं विधत्तेऽपि तु नकारस्य विभाषा लोपम्।

५. मारवाड़ीभाषायां 'पेटी' इत्युच्यते।

६. काशिकादौ 'नहिवृति' सूत्रे 'रुचि' पठ्यते। क्षीरस्तु 'रुजि' पाठं मन्यते।

१२२. भुजो कौटिल्ये । निर्भुजति । भुग्नः । भोगः सर्पकायः[1] । के (३।३।५८वा०)[भुजः]भुजेन कौटिल्येन गच्छतीति भुजगः[2] भुजंगः । रुधादौ भुज पालनाभ्यवहारयोः (७।१७)—भुनक्ति, भुङ्क्ते ॥१३६॥

१२३. छुप संस्पर्शे । छुपति, छोप्ता । ॥१३७॥

१२४. रुश रिश हिंसायाम् । रुशति । अरुक्षत् । रिशति । ५ तालव्यान्तौ, प्रस्तावाद् । भ्वादौ (१।४५८) मूर्धन्यान्तौ—रोषति । रेषति । दिवादौ रुष रोषे (४।१२३)—रुष्यति ॥१३८,१३९॥

१२५. लिश गतौ । लिशति । लेष्टा । भ्वादौ लिश अल्पीभावे[3] लेशति, लेशः ॥१४०॥

१२६. स्पृश संस्पर्शे । स्पृशति, स्प्रष्टा, स्पर्ष्टा—अनुदात्तस्य १० चर्दुपधस्यान्यतरस्याम् (६।१।५९) अमागमः । स्पृशमृशकृषतृपदृपः सिज् वा (३।१।४४ वा०)—अस्पृक्षत्, अस्प्राक्षीत्, अस्पार्क्षीत् । पदरुज (३।३।१६) इति कर्तरि घञ्—स्पर्श उपतप्ता[4] । स्पृशोऽनुदके क्विन् (३।२।५८), क्विन्प्रत्ययस्य कुः (८।२।६२) इति कुत्वम्, अन्यथा व्रश्चादि (८।२।३६) सूत्रेण, छशां च इति षत्वं स्यात्, ततश्चान्तर्यात् षस्य खः, खस्य १५ वावसाने (८।४।५६) इति चर्त्वेन कः, पक्षे जश्त्वेन गः, इति ग्रन्थोऽयुक्तः[5]—

---

१. भाष्यकारस्तु 'अथवा भोगशब्दः शरीरवाच्यपि दृश्यते । तद्यथा-'अहिरिव भोगैः पर्येति बाहुम्' (ऋ०६।७५।१४) इति । अहिरिव शरीरैरिति गम्यते' इति (५।१।६) वदन् शरीरसाधारण इति मन्यते ।

२. 'भुजगः' इत्यत्र 'अन्येष्वपि दृश्यते' (३।२।४८ वा०) इति डः । 'भुजङ्गः' २० इत्यत्र खच्प्रकरणे गमेः सुप्युपसंख्यानम् (३।२।३८ वा०) इति खच्, 'खच्च डिद्वा' (३।३।३८ वा०) इति डित्त्वे रूपम् । तदभावे 'भुजङ्गमः' इत्यपि भवति ।

३. नायं भ्वादौ पठ्यते । दिवादौ (६९) तु पठ्यते । तस्य 'लिश्यते' इति भवति । दिवादिव्याख्याने (६९) तु तुदादेरेव निर्देशः क्रियते, न भ्वादेः । तस्माद्पपाठोऽयम् । २५

४. 'स्पृश उपतापे' (३।३।१६ वा०) इति वार्त्तिके तद्व्याख्याने च 'उपताप' शब्दः प्रयुज्यते ।

५. कस्य ग्रन्थस्य, कथं च प्रत्याख्यानं क्रियत इति न ज्ञायते । षत्वात्

पादस्पृक् उदकस्पर्शः। स्पृशेः श्वण्शुनौ पृ च (उ० ५।२७) पार्श्वम्, पर्शुः। तिथपृष्ठ (उ० २।१२) इति पृष्ठम् ॥१४१॥

१२७. विछ गतौ। गुपूधूपविछि (तु० ३।१।२८) इत्यायः—विच्छायति। विछेस्तुदादिपाठः सार्वधातुकेऽप्यायानित्यत्वे लिङ्गम्[1] पणतिवत्—विच्छति, विच्छती विच्छन्ती, तथा च शपि नित्यमिति भाष्यम् (३।१।३१) आर्याः शे विकल्पम्[2], द्रमिडास्तु पाठबलाद् आयव्यवायेऽपि कार्यमाहुः—विच्छायन्ती विच्छायती, यथा जुगुप्सत इति सन्व्यवायेऽपि तङ्। यजयाच (३।३.९०) इति नङ्—विश्नोऽन्तरायः। चुरादौ भासार्थः (१०।१९७)—विच्छयति ॥१४२॥

१२८. विश प्रवेशने। विशति, वेष्टा। नेर्विशः (१।३।१७) तङ्—निविशते। अभिनिविशश्च (१।४।४७) इति कर्म-ग्राममभिनिविशते। विभाषा गमहनविदविशाम् (७।२।६८) क्वसौ वेट्—विविशिवान् विविश्वान्। पदरुज (३।३।१६) इति कर्तरि घञ्—वेशो वेश्यावाटः। नेपथ्ये व्याप्त्यर्थे वेशः[3]। त्रिशिपतिपदि (३।४।५६) इति णमुल्—गेहानुप्रवेशम् आस्ते, गेहं गेहमनुप्रवेशमास्ते, गेहमनुप्रवेशम् अनुप्रवेशम्। अशूप्रुषि (उ० १।१५१) इति क्वन्—विश्वम्। विटपविष्टप (उ० ३।१४५) इति विष्टपं लोकः, विशिपम्। जॄविशिभ्यां झच् (उ० ३।१२६)—वेशन्तः पल्वलम्। वेः शालच् (५।२।२८) इति विशाल-विशङ्कटौ ॥१४३॥

१२९. मृश आमर्शने। आमर्शनं स्पर्शः। परामृशति, आ-

---

पूर्वं कुत्वप्रवृत्तावप्यान्तरतम्यात् 'ख' एव प्राप्नोति, षत्वेऽपि च। तथा सति को भेद इति न ज्ञायते। वयं तु मन्यामहे शकारस्य षत्वे, तस्य झलां जशोऽन्ते' (८।२।३९) इति डत्वे, तस्य कुत्वे गकारे वावसाने (८।४।५६) इति प्रक्रियया भाव्यम्, अन्यथा पूर्वं कुत्वेन खत्वे कृते जश्त्वप्रसंगे कुत्वमसिद्धं स्यात् पूर्वत्रासिद्धमितिनियमात्।

१. विछेस्तुदादिपाठो न केवलं नुम्विकल्पार्थं एव, अपि तु विकरणस्वरार्थोऽपि। आयस्य नित्यत्वे उभयमपि न स्यात् तेन युक्त एव स्वामिग्रन्थः। अत्र पुरुषकारोऽपि द्रष्टव्यः (पृष्ठ ५५)। २. नुम इति शेषः।

३. अत्र 'वेषः' इति शुद्धः पाठो द्रष्टव्यः (तु० अमर २।६।९९)। लिखिशेन नायं दोषो बुद्धः।

मर्शन इत्युक्तेः सोपसर्गः। विम्रष्टा, विमर्ष्टा। स्पृशमृश (३।१।४७ वा०) इत्यमृक्षत् आम्राक्षीत् अमार्क्षीत् ॥१४४॥

१.३०. णुद प्रेरणे। नुदति। तुन्दशोकयोः परिमृजापनुदोः (३।२।५) कः—शोकापनुदः पुत्रः। नुदिस्तुदेरनन्तरं पठितः (६।२) स्वरितेत् तस्मादिह परस्मैपदिमध्ये न पाठ्यः[1] ॥१४५॥ ५

१.३१. शद्लृ शातने। पाघ्राध्मा (७।३।७८) इति शीयादेशः—शीयते, शदेः शितः (१।३।६०) तङ्। शत्स्यति। शदेरगतौ तः (७।३।४२) णिचि—फलानि शातयति। अशदत् (द्र० ३।१।५५) ॥१४६॥

१.३२. षद्लृ विशरणगत्यवसादनेषु। सीदति सदेः सीदादेशः (द्र० ७।३।७८)। सीदती, सीदन्ती। सिषत्सति। असदत्। १० सत्ता। एतयोर्भ्वादौ पठितयोः (१।५९५, ५९४) द्विःपाठे फलं नोत्पश्यामः। विकरणस्वरे विशेष इति वाम्यूह्यम्[2] ॥१४७॥

१.३३. अनुदात्ता उदात्तेतः।

१.३४. मुच्लृ मोक्षणे। इतः पञ्चानिट उभयपदिनश्च। शे मुचादीनां (७।१।५९) नुम्—मुञ्चति, मुञ्चते। अमुचत्, अमुक्त। १५ मोक्ता। मुचोऽकर्मकस्य गुणो वा (७।४।५७) इति सन्यभ्यासलोपो वा—मोक्षते वत्सः स्वयमेव। मुमुक्षत। इगुपधात् किः (तु० उ० ४।१२०)—मुचिः। नमुचिः—नभ्राण्नपाद् (६।३।७५) इति नञ् प्रकृत्या। सिवि मुचेष्टे रू च (तु० उ० ४।१६३)—मूत्रम्। वृतॄवदि (उ० ३।६२) इति सः—मोक्षः ॥१४८॥ २०

१.३५. लुप्लृ छेदने। लुम्पति, लुम्पते। अलुपत्, अलुप्त। लुपसदचर (३।१।२४) इति यङ्—लोलुप्यते ॥१४९॥

१.३६. विद्लृ लाभे। विन्दति, विन्दते। अविदत्, अवित्त।

---

१. कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदार्थं इह पाठ इति सायणः। धातु० पृष्ठ ३४४। अत्र धातुवृत्तेः ३२३ पृष्ठस्थः (६।२) पाठोऽनुसंधेयः। २५

२. उभयत्र पाठस्य स्वरभेद एव प्रयोजनम्। अपि चेह पाठे नुम्विकल्पोऽपि (द्र० ७।१।८०) भवति।

उषविदजागुरन्यतरस्याम् (तु० ३।१।३८) आम्—विवेद विदांचकार[१]। विभाषा गमहनविद (७।२।६८) इति वेट्—विविद्वान्, विविदिवान्। अनुपसर्गाल्लिम्पविन्द (३।१।१३७) इति शः—विन्दः, गोविन्दः, अरविन्दः। वित्तो भोगप्रत्यययोः (८।२।५८)—वित्तं धनम्, क्लेशैर्वित्तः[२]। ५ अन्यत्र विन्नं लब्धम्। यावति विन्दजीवोः (३।४।३०) णमुल्—यावद्वेदमधीते ॥१५०॥

१३७. लिप उपदेहे। उपदेहो वृद्धिः। लिम्पति, लिम्पते। लिपिसिचिह्वश्च (३।१।५३) इत्यङ्—अलिपत्। आत्मनेपदेष्वन्यतरस्याम् (३।१।५४)—अलिप्त अलिपत। अनुपसर्गाल्लिम्प (३।१।१३८) इति शः—१० लिम्पः। नौ लिम्पेः (३।१।१३८ वा०)—निलिम्पा देवाः ॥१५१॥

१३८. षिच क्षरणे। सिञ्चति, सिञ्चते। उपसर्गात् सुनोति (८।३।६५) इति षः—अभिषिञ्चति। स्थादिष्वभ्यासेन चाभ्यासस्य (८।३।६४)—अभिषिषेच, अभ्यषिञ्चत्। असिचत्, असिक्त, असिचत। दाम्नी (३।२।१८२) इति ष्ट्रन्—सेक्त्रम्। सिचेः संज्ञायां कन् नुमौ च (द० १५ उ० ९।१०६)—सिङ्कः। सिचो यङि (८।३।११२) न षत्वम्—अभिसेसिच्यते। ण्यन्तस्योपसंख्यानम्[३]—असीसिचत्[३] ॥१५२॥

१३९. अनुदात्ताः स्वरितेतः।

१४०. कृती छेदने। इत उत्तरं त्रयः सेटः परस्मैपदिनश्च। कृन्तति। कर्तिता। सेऽसिचि (७।२।५७) इति कर्त्स्यति, कर्तिष्यति। २० कृत्तः, ईदित्त्वं यङ्लुगर्थं[४]—चरीकृत्तः। किरुपपदात् क्विप् (द्र० ३।२।७६)[५]—कृत्। कर्तरी छेदनी। कृत्तिश्चर्म। कृतेश्छः क्रू च (उ०

१. इतोऽग्रे 'आमि ज्ञानार्थस्य ग्रहणं विद (२।१।३८) इत्यदन्तनिर्देशात्। अस्य तु विवेद' इत्यधिकम्।

२. 'क्लेशैर्वित्तः' पाठा०।

२५ ३. नैतद्वचनं क्वचिद् दृष्टम्। धातुवृत्तौ (पृष्ठ ३४६) स्मृतमिदम्।

४. सकारादौ प्रत्यय इड्विकल्पनात् (द्र० ७।२।५७) यस्य विभाषा (७।२।१५) इतीट्प्रतिषेधः सिद्ध एव, किमीदित्त्वेन। तदनर्थकं सत् यङ्लुकि इट्प्रतिषेधार्थमिति भावः।

५. लिपिविशेनात्र '३।२।१७८' संख्या निर्दिष्टा, सा चिन्त्या।

२।२१) — कृच्छ्रम्[1] क्रूरः । कृत्यशूभ्यां क्स्नः (उ० ३।१७)—कृत्स्नम् । कृतिभिदि (उ० ३।१४७) इति तिकन्—कृत्तिकाः । रुधादौ कृती वेष्टने (११२)—कृणत्ति ॥१५३॥

१४१. खिद परितापे[2]। खिन्दति भिदादौ (गण० ३।३।१०४) खिदा । रुधादौ खिद दैन्ये (७।१२) – खिन्ते । खिद्यत इति कर्मकर्तरि[3] ५ दिवादौ (४।६१ दुर्गमते) वा ऽभ्यूह्यः ॥१५४॥

१४२. पिश अवयवे पिंशति । हृपिशिरुहि (द०उ०१।४७) इतीन्—पेशिर्मांसंलेशः पिशुनः, पिशितम्, पेशलः ॥१५५॥

१४३. उदात्ता उदात्तेतः ।

१४४. वृत् । मुचादयो वर्तिताः । १०

भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ क्षीरतरङ्गिण्यां
तुदादयः सम्पूर्णाः[4] ॥

———

१. लौगाक्षिगृह्य (५।१) व्याख्यायां देवपालः कृच्छ्रशब्दसाधकं चारायणि-सूत्रमुदाजहार—"तथा च चारायणिसूत्रम्—'पुरुकृते च्छ्रछ्रयोः' । पुच्छम् कृच्छ्रम् ।" विशेषोऽस्मदीये 'सं० व्या० शास्त्र का इतिहास' ग्रन्थे (पृष्ठ ७६) द्रष्टव्यः । १५

२. 'परितापे परितापनक्रियायामिति क्षीरस्वामी' इति पुरुषकारोद्धृतः पाठः (पृष्ठ ८५) । इह तु तथा नोपलभ्यते ।

३. पद गतौ सूत्रव्याख्यानान्ते (पृ० २१०) 'खिद दैन्य इति दुर्गः' इत्यस्य व्याख्यायां 'खिद्यत इति कर्मकर्तरि तु वामनः' इत्युक्तवान् स्वामी । तत्रस्था टिप्पण्यत्राप्यनुसंधेया । ४. 'तुदादिर्गणः समाप्तः' पाठा० । २०

# ॥ अथ रुधादिगणः ॥

१. रुधिर् आवरणे । आवरणं व्याप्तिः । इतः सप्तानिट् उभयपदिनश्च । रुधादिभ्यः श्नम् (३ । १ । ७८)—रुणद्धि । अनुस्वारीभूतो णत्वमतिक्रामति—[१]रुन्द्धे. श्नसोरल्लोपः (६।४।१११) । इरितो
५ वा (३।१।५७)—अरुधत् अरौत्सीत्, अरुद्ध । सिपि धातो रुर्वा (८।२।७४)—अरुणत् त्वम्, अरुणः । न रुधः (३।१।६४) इति कर्मकर्तरि चिण् नास्ति—अरुद्ध गौः स्वयमेव । रोद्धा । संपृचा(दौ (द्र० ३।२।१४२) अनुरोधी सप्तम्यां चोपपीडरुधकर्षः (३।४।४९)—व्रज उपरुध्य, व्रजोपरोधं गाः पाययति । इषितिमिमदि (द० उ० ८।२६ कपाठः) किरच्—रुधिरम् ॥१॥

१० २. भिदिर् विदारणे । भिनत्ति, भिन्ते । अभिदत् अभैत्सीत् अभित्त । भेत्ता । भित्तं शकलम् (८।२।५९), भिन्नमन्यत् भिद्योद्ध्यौ नदे (३।१।११५) । काष्ठभित् । विदिभिदिच्छिदेः कुरच् (३।२।१६२)—भिदुरं पविः । भित्तिः । कृतिभिदिलतिभ्यः किन् (उ० ३।१४७)—भित्तिका । कॄगॄशॄपॄकुटि (उ० ४।१४३) इतीः—भिदिर्वज्रम् । कर्मकर्तरि केलिमः
१५ (द्र० ३।१।९६ का०) भिदेलिमं काष्ठम् । रक् (द्र०उ० २.१३)–भिद्रम् । इषितिमि (द० उ० ८।२६ कपाठः) इति किरच्—भिदिरम् । भिदादौ (३।३।१०४ गणसूत्र) भिदा विदारणे ॥२॥

३. छिदिर् द्वैधीकरणे । अद्वैधस्य पृथक्त्वे । छिनत्ति, छिन्ते । अच्छिदत् अच्छैत्सीत्, अच्छित्त । छिदुरम्, रज्जुच्छित् । रक्
२० (द्र० उ० १।८३)—छिद्रम् छिदिः पर्शुः । छिदिरः, छित्वरः । भिदादौ (३।३।१०४ गणसूत्रम्) । छिदा द्वैधीभावे, विच्छित्तिरन्यत्र ॥३॥

४. रिचिर् विरेचने । विरेचनं निःसारणम् । रिणक्ति, रिङ्क्ते । अरिचत् अरैक्षीत्, अरिक्त । रिक्तः । रिक्थं धनम् । रेकणस् । चुरादौ रिच वियोजनसंपर्चनयो (१०.२१०)—रेचयति ॥४॥

२५ ५. विचिर् पृथग्भावे । विनक्ति, विङ्क्ते । अविचत्, अवैक्षीत्

---

१ श्नमोऽकारलोपे, नस्यानुस्वारे, अनुस्वारस्य ययि परसवर्णः (८।४।५८) इति परसवर्णेन नकारः । स च पूर्वत्रासिद्धम् (८।२।१) इति न्यायेन 'अट्कुपु' (८।४।२) इत्यनेन णत्वे कर्तव्येऽसिद्ध इति कृत्वा णत्वं न भवतीति भावः ।

अविक्त । विवेक्तः । जुहोत्यादौ (३।१३) वेवेक्ति, विविक्ते ॥५॥

६. क्षुदिर् संपेषे । क्षुणत्ति, क्षुन्ते । क्षोत्ता । अक्षुदत् अक्षौत्सीत्, अक्षुत्त । क्षुण्णः । रक् ।(द्र० उ० १।१३)—क्षुद्रः ॥६॥

७. युजिर् योगे । युनक्ति, युङ्क्ते, अयुजत् अयौक्षीत्, अयुक्त । प्रोपाभ्यां युजेरयज्ञपात्रेषु (१।३।६४) तङ्—प्रयुङ्क्ते, उपयुङ्क्ते । ५ नेह—द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति[1] । दिवादौ युज समाधौ (४।६७)—युज्यते। अस्यैव ग्रहणानि ॥७॥

८. अनुदात्ताः स्वरितेतः ।

९. उछृदिर् दीप्तिदेवनयोः, १०. उतृदिर् हिंसानादरयोः । ११. उदात्तौ स्वरितेतौ । छृणत्ति छृन्ते । अच्छृदत् अच्छर्दीत्, १० अच्छर्दिष्ट । चङि—अचच्छर्दत् अचिच्छृदत्, उर्ऋत् (७।४।७) इतिवा ऋकारः । सेऽसिचि कृति (तु० ७।२।५७) इति वेट्—छर्दिष्यति छर्त्स्यति। उदितो वा (७।२.५६)—छृत्त्वा, छर्दित्वा । छृण्णः । अर्चिशुचि (उ० २। १०८) इतीसिः—छर्दिस् । चुरादौ छर्द वमने (१०।४८)—छर्दयति । तृणत्ति तृन्ते । अतृदत्, अतर्दीत् । तर्त्स्यति, तर्दिष्यति । तृत्त्वा १५ तर्दित्वा । तृण्णः । वितर्दिका वेदिः ॥८,९॥

१२. कृती वेष्टने । १३. उदात्त उदात्तेत् । कृणत्ति । कर्तित्वा । कर्त्स्यति कर्तिष्यति । कृत्तः । ईदित्वं यङ्लुगर्थम्[2]—चरीकृत्तः । कृतेराद्यन्तविपर्ययश्च (उ० १।१६)—तर्कुः । तुदादौ कृती छेदने (६।१४०)—कृन्तति, कृत्तिः ॥१०॥ २०

१४. ञिइन्धी दीप्तौ । १५. उदात्तोऽनुदात्तेत् । इन्धे, श्नान्नलोपः (६।४।२३) । इद्धम् आष्ट्राग्न्योरिन्धेः (६।३।७० वा०) मुम्—आष्ट्रमिन्धः, अग्निमिन्धः । अग्निमिन्धे—अग्नीत् । अवोदैध (६।४।२९) इत्येधः इध्मः । पधस्त्वेधेः (१।२) असुनि (द्र० उ०

---

१. अनुपलब्धमूलमिदम् । २५

२. एतद्विषये वृती धातौ (पृष्ठ १६६ टि० १) तौदादिके कृती धातौ (पृष्ठ २५४ टि० ४) च टिप्पणं द्रष्टव्यम् ।

१०५ ह्नप व्यक्तायां वाचि । ॥११७॥

१०६. चुट छेदने । चोटयति । तुदादौ (६।८२) चुटति । चुटि इति नन्दी—चुण्टयति । चुडि[1] इति दुर्गः ॥११८॥

१०७. इल प्रेरणे । एलयति । भ्वादौ—एलति[2] ॥११९॥

१०८. म्रक्ष म्लेच्छने । म्रक्षयति ॥१२०॥ ५

१०९. म्लेच्छ अव्यक्तायां वाचि । म्लेच्छयति । भ्वादौ (१।१२५) म्लेच्छति । म्रक्ष रोषे[3], म्लेच्छ अव्यक्ते शब्दे[4] इति सिद्धे चन्द्र पतौ नैच्छत् । बहुलमेतन्निदर्शनम् (१०।३२५) इति सर्वे चुरादौ पाठ्याः इति चान्द्रोऽभिप्रायः[5] ॥१२१॥

११०. ब्रीस बर्ह हिंसायाम् । ब्रीसयति । ब्रूस इत्येके । बर्हयत्यरिम् । भ्वादौ बर्ह प्राधान्ये (१।४२३) बर्हते ग्राम्यः । ॥१२२,१२३॥ १०

१११. गर्द शब्दे । गर्दयति । भ्वादौ (१।४७) गर्दति । गर्ज इत्येके ॥१२४॥

११२. गर्ध अभिकाङ्क्षायाम् । गर्धयति । दिवादौ (४।१३६) गृध्यति ॥१२५॥ १५

११३. गुर्द पूर्वनिकेतने । पूर्वनिकेतनम् आद्यनिवासः ।[6] पारायणे द्वौ धातू—गुर्दयति[7], पूर्वयति । भ्वादौ पूर्व पूरणे (१।३८१)—पूर्वति ॥१२६॥

---

१. 'चुडि इति नन्दी-चुण्डयति । चुटि इति दुर्गः' इति पाठान्तरम् । अयमेव पाठो युक्तः प्रतिभाति कातन्त्रधातुपाठे 'चुटि छेदन' इति पाठदर्शनात् । २०

२. भ्वादौ 'इल' न क्वचित् स्वामिना पठ्यते । तुदादौ ६।६५ तु पठ्यते । तौदादिके तु न भौवादिकं निर्दिश्यते ।

३. मुद्रिते चान्द्रधातुपाठे 'म्रक्ष संघाते' (१।३१७) पठ्यते ।

४. 'म्लेच्छ अव्यक्ते वचने' इति मुद्रिते चान्द्रधातुपाठे (१।५३) पठ्यते ।

५. 'चान्द्राभिप्रायः' पाठा० । २५

६. अत्र धातुवृत्तौ 'पूर्वनिकेतनमासाद्यामभ्यवहारः' इति पाठः स्वामिनाम्नोद्ध्रियेते ।

७. सर्वहस्तलेखेष्वित्थमेव पठ्यते गुर्द भ्वादावू (१।२०) अपि पठ्यते । तत्र दीर्घत्वस्यानित्यत्वमुक्त्वा गूर्दते गुर्दते इत्युभयथोक्तम् ।

११४, ११५. जसि रक्षणे, दहि[1] च । जंसयति, दंहयति[1] ॥१२७, १२८॥

११६. ईड स्तुतौ । ईडयति । अदादौ (२।१२) ईट्टे ॥१२९॥

११७. जसु हिंसायाम् । जासिनिप्रहण (२।३।५६) इति षष्ठी

५ चौरस्योज्जासयति । दिवादौ (४।१०५) जस्यति ॥१३०॥

११८. पिडि संघाते । पिण्डयति । भ्वादौ (१।१७७) पिण्डते । पिण्डः, पिण्डी । पडि इत्येके—पण्डयति । पण्डितः, पण्डा, भ्वादौ (१।१८५) पण्डते ॥१३१॥

११९. रुट रोषे । रोटयति । ग्रामरोटः । रुषेत्येतच्चन्द्रो मत्वा

१० भ्वादिदिवादिभ्यां (१।४५८, ४।१२३) सिद्धमाह । रुट उपघाते । रुठ इत्येके ॥१३२॥

१२०. डपि डिपि संघाते । डम्पयति । डिम्पयति । डभि डिभि इति दौर्गाः—डम्भयति, डम्भः, डिम्भयति डिम्भः ॥१३३,१३४॥

१२१. दभ दिभि तिप टिप डिप स्तिप क्षेपे । दाभयति ।

१५ दिम्भयति । दभि इति नन्दी । दम्भयति । तेपयति । टेपयति । डेपयति । स्तेपयति । डबि डिबि इति चन्द्रः[2]—विडम्बयति । आडम्बरः, डिम्बयति । डिम्बं शस्त्रकलहः ॥१३५—१४०॥

१२२. स्तुप[3] समुच्छ्राये। स्तूपयति । दिवादौ (४।१२५) स्तूप्यति । चन्द्रःसोपदेशमाह[4] तुष्टूपयिषति । स्तूपान्ते पर्यङ्के त्रिविंशे सूत्रशते[5]

---

२० १. 'डभिं—डम्भयति' पाठा० ।

२. मुद्रिते चान्द्रधातुपाठे नोपलभ्यते ।

३. 'स्तूप' इति युक्तः पाठः, अन्यथा 'स्तूपयति' इत्यत्र दीर्घत्वं न स्यात् । दिवादावपि (४।१२५) स्तूप 'इत्येव' पठ्यते । अपि चैतस्मिन्नेव सूत्रव्याख्याने 'स्तूपान्ते पर्यङ्के इत्यत्र दीर्घ एव निर्दिश्यते ।

२५ ४. क आह इति न प्रतीयते । चुरादौ तु मुद्रिते चान्द्रधातुपाठे नोपलभ्यते । दिवादाव् (४।७०) अपि मुद्रिते चान्द्रपाठे 'स्तूप' इत्येव पठ्यते ।

५. अस्माकीना तु द्वाविंशोत्तरशतसूत्रसंख्या भवति । 'वर्ण वर्णने' (१०।१७) इत्युत्तरं 'पक्ष परिग्रह इत्येके' इति पठ्यते, 'पसि नाशने' (१०।६८)

द्विचत्वारिंशन्धातुशतम्[1]। आदितः १६७७ ॥१४१॥

१२३. आ कुस्मादात्मनेपदी। कुस्मनाम्नो वा (१०।१५७) इति वक्ष्यति। आ एतस्मादितः परम् आत्मनेपदी गणः, यो यो धातुर्वा। अभिविधावाङ् मर्यादायां हि प्राक्कु[2]स्मादिति ब्रूयात्।

१२४. चित संचेतने। चेतयते। भ्वादौ चिती संज्ञाने (१।३४) चेतति ॥१४२॥ ५

१२५. दाशृ दाने। दाशयते। भ्वादौ (१।६२१) दाशति, दाशते ॥१४३॥

१२६. दशि दंशने। दंशयते। भासार्थः (१०।१९७) दंशयति। भ्वादौ दन्श दशने (२।७१६) दशति ॥१४४॥ १०

१२७. दसि दर्शनदंशनयोः। दंसयते दंसितः। भासार्थः (१०।१९७) दंसयति ॥१४५॥

१२८. तत्रि कुटुम्बधारणे। कुटुम्बं परिवारः, उपलक्षणञ्चैतत्। तन्त्रयते। तन्त्रम्। स्वतन्त्रः। अवितॄस्तृतन्त्रिभ्य ईः (उ० ३।१५८)—तन्त्रीः। अच इः (उ० ४।१३१)—तन्त्रिः। तन्द्रा तन्द्रीति पृषोदरादित्वात् (द्र० ६।३।१०९)। द्वौ धातू मत्वा चान्द्राः कुटुम्बयत इत्यप्युदाहरन्ति[3] ॥१४६॥ १५

---

इत्युत्तरं 'भदि कल्याणे इति दुर्गः' इति पठ्यते। अनयोरेकतरं स्वामिना सूत्रमभिप्रेतं स्यात्। तत्रापि 'पद परिग्रह इत्येके' इत्यस्यैव कथंचित सूत्रत्वं सम्भवति न तूत्तरस्य, यतो हि दुर्गः खलु कातन्त्रधातुपाठव्याख्याता, स चौत्तरकालिकः। वस्तुतस्तु २० अन्यत्र क्वचिदपि एकीयमतं मूलधातुसूत्रेषु स्वामिना न पठितम्, इत्यतोऽत्रापि नैतत् सूत्रमिति मन्यामहे।

१. अस्मद् गणनया १४१ धातवो भवन्ति। अत्र मन्ये स्वामिना 'वर्ण वर्णने' इत्युत्तरं पठ्यमानो पदधातुरप्यङ्गीकृतः स्यात्। अत्र इतः पूर्वा टिप्पणी द्रष्टव्या। २५

२. 'सूत्रयेत' पाठा०।

३. 'उदाजहुः' पाठा०, मुद्रिते चान्द्रधातुपाठे 'तत्रि कुटुम्बधारणे' इत्येवमेकधातुरूपं सूत्रं पठ्यते, स चापपाठः।

१२९. मन्त्रि गुप्तभाषणे। मन्त्रयते। मन्त्रः ॥१४७॥

१३०. स्पश ग्रहणसंश्लेषणयोः। स्पाशयते। अत्स्मृदृत्वर (७।४।९४) इत्यपस्पशत्। वा दान्त (७।२।२७) इति स्पष्टः स्पाशितः। भ्वादौ स्पश बाधने (तु० १।६२६) स्पशति। स्पशश्चरः ॥१४८॥

५ १३१. भर्त्स तर्ज संतर्जने। भर्त्सयते, [तर्जयते]। लक्ष्ये भर्त्सयति तर्जयतीति दृश्यते। एवं 'निशामयति, भालयति, कोटयति, वञ्चयति, निवेदयति' इत्यादि। अत एव चुरादिभूतान्स्वरान्विताञ्चाकरोत्[1]। भ्वादौ तर्ज भर्त्सने (१।१४०)—तर्जति ॥१४९,१५०॥

१३२ वस्त गन्ध अर्दने। वस्तयते। वस्तः, बस्तिः। गन्धयते, १० गन्धः। गन्धर्वो घोटकः ॥१५१,१५२॥

१३३. किष्क हिंसायाम्। किष्कयते। किष्कुर्हस्ते वितस्तौ च (अमर० ३।३।७) किष्किन्धा। हिष्क इति दुर्गः, हिष्कितं लक्ष्यते। भ्वादौ (१।६०४) हिक्कति ॥१५३॥

१३४. निष्क परिमाणे। निष्कयते। निष्कः ॥१५४॥

१५ १३५. लल ईप्सायाम्। लालयते। कुं[2]लालयते—कुलालः। भ्वादौ लड विलासे (१।२४०) लडति ॥१५५॥

१३६. कूण संकोचने। मुखं विकूणयते ॥१५६॥

१३७. तूण पूरणे। तूणयते। तूणः, तूणीरः। तूल इति चन्द्रः[3] ॥१५७॥

२० १३८. भ्रूण आशायाम्। भ्रूणयते। भ्रूणो गर्भः। आशंकायामित्येके ॥१५८॥

१३९. शठ श्लाघायाम्। शाठयते। शाठः। शट इति नन्दी, शल इति कौशिकः ॥१५९॥

---

१. उदात्तानुदात्तस्वरितविशिष्टान् इत्संज्ञकानित्यर्थः। काश्यपोऽप्याह—२५ 'कार्याभावादेव श्रुत्या पठन्ते'। चुरादय इति शेषः (द्र० धातु० पृष्ठ २७०)।

२. इतोऽग्रे कश्चित् पाठस्त्रुटितः।

३. नोपलभ्यते मुद्रिते चान्द्रधातुपाठे।

**१४०. यक्ष पूजायाम्** । यक्षयते । यक्षः । मनिन् (द्र० दश० उ० ६।७३) यक्ष्मा ॥१६०॥

**१४१. स्यम वितर्के** । स्यामयते । भ्वादौ स्यमु स्वन (१।५।६५) इति मित्—स्यमति, स्यमयति ॥१६१॥

**१४२. गूरी उद्यमे** । उद्गूरयते । आगूरणः । तुदादौ गुरी उद्यमे (६।६५) उद्गुरते । अपगुरो णमुलि (६।१।५३) इत्यसावात्वं वा—अपगारम्, अपगोरम् ॥१६२॥ ५

**१४३. शम लक्ष आलोचने** । निशामयते । वा दान्तशान्त (७।२।२७) इति शान्तः । अनालोचने—निशामितः । दिवादौ (४।९४) शाम्यति । शमोऽदर्शने (२।५७८) इति मित्त्वम्—शमयति रोगम् । १० लक्षयते लक्षणम्, लक्षते । अन्यत्र लक्षयति घटम् ॥१६३,१६४॥

**१४४. कुत्स अवक्षेपणे** । कुत्सयेत । कुत्सना । चिन्तिपूजि (३।३।१०५) इति कुत्सा ॥१६५॥

**१४५. त्रुट छेदने** । त्रोटयते रज्जुम् । तुदादौ (६।८०) त्रुटयति, वा भ्राश (३।१।७०) इति त्रुटति, त्रुड इत्येके[1] उत्त्रोडयते तृणम् ॥१६६॥ १५

**१४६. गल स्रावणे** । गालयते, उद्गालयते । भ्वादौ (१।३६४) गलति ॥१६७॥

**१४७. भल आभण्डने** । आभण्डनं निरूपणम् । निभालयते । ॥१६८॥

**१४८. कुट प्रतापने** । कोटयते ।[2] तुदादौ (६।१७१) कौटिल्ये—कुटति । त्रुट इति चन्द्रः[3], अत एव च त्रुट छेदने (१०।१४६) इत्यनेनैव सिद्धम् । कूट आप्रदान इति दुर्गः ॥१६९॥ २०

**१४९. वञ्चु प्रलम्भने** । प्रलम्भनं मिथ्याफलाख्यानम् ।

---

१. धातुवृत्तौ (पृष्ठ ३८८) 'कुट इत्येके इति स्वामी' पाठ उद्ध्रियते ।

२. पुरुषकारे (पृ० ६५) धातुवृत्तौ (पृ० ३८८) प्रौढमनोरमायां (पृष्ठ ६१८) च 'कुट्ट प्रतापने-कुट्टयते' इति पाठ उपलभ्यते । स तु नेह दृश्यते । २५

३. मुद्रिते चान्द्रधातुपाठे नोपलभ्यते ।

एवमादीनामनुबन्धः प्रत्यभिज्ञानार्थम्, स एवायमर्थान्तरे चुरादिरिति[1]। गृधिवञ्च्योः प्रलम्भने (१।३।६९) तङ्—वञ्चयते बालम्, अन्यत्राहिं वञ्चयति। भ्वादौ वञ्चु गतौ (तु० १।१२०)—वञ्चति ॥१७०॥

१५०. वृष शक्तिबन्धने। शक्तिबन्धनं प्रजननसामर्थ्यम्।[2] वर्षयते। वर्षधरः। भ्वादौ वृषु सेचने (१।४६४) [वर्षति]। तवर्गचतुर्थादिः सामर्थ्यधारणार्थं इत्येके—धर्षयतेऽरिम् ॥१७१॥

१५१. मद तृप्तिशोधने। शोधनं सम्पत्तिः[3]। तृप्तियोग इति नन्दी। मादयते। दिवादौ मदी हर्षे (४।१०१) माद्यति। घटादौ मदी हर्षग्लापनयोः (१।५५२) मदयति ॥१७२॥

१५२ दिवु परिकूजने। देवयते गन्त्री। दिवादौ (४।१) दीव्यति। भ्वादौ देवने (तु० १।१३४) परिदेवने ॥१७३॥

१५३. गॄ विज्ञाने। गारयते। तुदादौ निगरणे (६।११०)—निगिरति। क्र्यादौ शब्दे (९।२७) गृणाति। कॄ विज्ञान इति चन्द्रः ॥१७४॥

१५४. विद चेतनाख्यानविवादेषु। वेदयते सुखम्, आवेदयते कथाम्, प्रवेदयते वादिनम्। अदादौ (२।५९) वेत्ति, दिवादौ (४।६२) विद्यते। तुदादौ (६।१३२) विन्दति, विन्दते। रुधादौ (७।१७) विन्ते ॥१७५॥

१५५. मन स्तम्भे। स्तम्भो गर्वः। मानयते वृषलः[4]। पक्षे

---

१. धातुवृत्तिकारस्तु 'क्त्वायामिड्विकल्पार्थमनित्यणिचि लिङ्गमुकारानुबन्ध' इत्याह (पृष्ठ ३८८)।

२. पुरुषकारे (पृष्ठ ८५) धातुवृत्तौ (पृष्ठ ३८९) च 'तृप्तिशोधने तर्पणशुद्धौ' इति स्वामिनाम्नोद्ध्रियते पाठः।

३. धातुवृत्तौ (पृष्ठ ३८९) केशवस्वामिनाम्नोद्ध्रियतेऽयं पाठः।

४. वृषलशब्दो हि द्व्यर्थकः—धर्मात्मवाची अधर्मात्मवाची च। तथा चोक्तं निरुक्ते—वृषलो वृषशीलो वृषाशीलो वा (३।१६)। धर्मात्मवाची 'वृषादिभ्यश्चित्' इत्यौणादिकेन (१।१०६) सूत्रेण सिद्ध्यते। मुद्राराक्षसेऽसकृत् चाणक्येनोच्चार्यमाणं वृषलपदं धर्मात्मवाच्येव, न निन्दार्थकः। को हि नाम बुद्धिमान् राजानं निन्द्यपदेन वक्तुमुचितं मन्यते।

मनतीति चन्द्रः[1] । दिवादौ (४।६६) मन्यते, तनादौ (८।९) मनुते ।
॥१७६॥

१९६. यु जुगुप्सायाम् । यावयते ब्राह्मणान् जाल्मः। याव्यम्। अदादौ मिश्रणे (२।२५) यौति । क्र्यादौ बन्धने (९।७) युनाति । युज्ञ कुत्सायामित्येके—योजयते ॥१७७॥ ५

१९७. कुस्म नाम्नो वा । कुस्ममिति दृष्टम्[2] । कुस्मेत्यस्मान्नाम्नः प्रातिपदिकाण्णिज् वा भवति । यद्वा—कुस्ममिति प्रकृत्यन्तरं दृष्टम्, कुपूर्वात्स्मयतेः—(१।६७८) परिखादिवद्[3] अन्येष्वपि दृश्यते (३।२।१०१) इति डप्रत्ययः । कुस्मयते, कुस्मयति । ननु स्मिङः कुपूर्वात् कुस्मयत इति सिद्धम्, कुस्माच्च नाम्नः सर्वप्रातिपदिकेभ्यः १० क्विपि (द्र० ३।१।११ भा०) कुस्मतीति सेत्स्यति तत्किमर्थं कुस्मनाम्नो वेत्युच्यते? इति चोदित्वा परिहरति—कुस्मयतिरकारितः इति। कोर्नाम्ना सह नित्यसमासोऽस्ति (द्र० २।२।१८), न तु कुत्सितं स्मयते इति तिङा उपपदमतिङ् ( २।२।१९ ) इति। ततश्च स्मयते कु इत्यपि प्रयोगानियमः, स्यात्, स च नेष्यते । अथाण्यन्तेऽपि प्रकृत्यन्तरे भाषा- १५ यामेतद्रूपं भवेत्, केन निर्वायत इत्याह—उपसर्गस्य बाह्यत्वमिष्यते प्रकुस्मयते, विकुस्मयत[4] इति·········ते प्राग्धातोः (१।४।८०) इति, कुस्मयत इत्युपसर्गस्य इत्यपव्याख्या[5] । अपि च सार्वधातुके यकि

१. चन्द्रेण स्वीयधातुपाठव्याख्यायामेतल्लिखितं स्यात् ।

२. इदम्, अग्रे च स्थूलाक्षरेषु मुद्रितानि वचनानि धातुपाठस्य सूत्राणि २० पूर्ववृत्तेर्वचनानि वा प्रतीयन्ते । इत्थं च कृत्स्नः पाठः—"कुस्मनाम्नो वा, कुस्ममिति दृष्टम्, कुस्मयतिरकारितः, उपसर्गस्य बाह्यत्वमिष्यते, तस्मात् कारित एव ।" धातुवृत्तौ त्वेवं पठ्यते—"कुस्मनाम्नो वा, कुस्ममिति दृष्टम्, कुस्मयतिरकारितमिति, कोर्नित्यसमासत्वात् उपसर्गस्य च बाह्यत्वात् कारितमेव ।" धातुप्रदीपे त्वित्थं पठ्यते—"कुस्म कुस्मयने, कुस्मनाम्नो वा, कुस्ममिति दृष्टमेव, कुस्मयतिरकारितः ।" २५ सिद्धान्तकौमुद्यां नैतानि वचनानि व्याख्यायन्ते ।

३. यथा परिखाशब्दे डस्तथैव कुस्म इत्यत्रापीत्यर्थः ।

४. इतोऽग्रे कश्चित् पाठस्त्रुटितः ।   ५. कस्येयं व्याख्येति न ज्ञायते ।

णिलोपे कुस्म्यत इतीष्यते, कुस्मीयत इति स्यात्, कुस्मयाञ्चक्रे इत्यपि कुस्मियाञ्चक्रे इति वा, कुसिस्मिया इति वा, अचुकुस्मतेति वा, चुकुस्मायिषते कुसिस्मयिषते इति, कुस्मनेति कुस्मितिः कुस्मयित्वेति प्रकुस्म्येति, तस्मादकारित एव। न तु स्वार्थनिर्देशं
५ विना क्रियावाचित्वाभावात् क्रियानिबन्धनाः कारकप्रत्ययाः कर्तव्याः। अथ तत्करोत्याद्यर्थे सूत्रयत्यादिवद् (द्र० ३।२। २६ वा०) अपि णिज् इष्यते, तर्हि प्रातिपदिकाद् धात्वर्थे (१०।२६५) इत्यनेन सिद्धः? सत्यम्, किन्त्वात्मनेपदप्रवृत्तिर्धातुरूपनिवृत्तिश्च पृथक्पाठेऽस्य प्रयोजनम्। दुर्गस्तु कुस्मयन इत्यपाठीत्। कुस्मेति
१० धातुर्मतिदृष्टं बुद्ध्योत्पादितमर्थमाहेति च ॥१७८॥

चतुस्त्रिंशतिसूत्रेषु सप्तत्रिंशताधातुभिराकुस्मीयपर्यष्टकः।

१५८. चर्च अध्ययने। चर्चयति वेदम्। चिन्तिपूजि (३।३। १०५) इति चर्चा ॥१७९॥

१५९. बुक्क भाषणे। बुक्कयति श्वा। भ्वादौ (१।८७)
१५ बुक्कति ॥१८०॥

१६०. शब्द उपसर्गादाविष्कारे[1]। प्रतिशब्दयति गिरिः- 'प्रतिश्रुत्कामा[2]ऽऽविष्करोति' इत्यर्थः। विशब्दयति। योगविभागादाविष्कारे चेत्यनुपसर्गादपीति नन्दी—शब्दयति। दौर्गाणां शब्द इत्येकं सूत्रम्, शब्दक्रियायामित्यर्थः,तत उपसर्गाद् आविष्कार इति। चन्द्रः[3] प्रातिपदिकाद्धा-
२० त्वर्थे (१०।२९५) इत्यनेनैव साधयति ॥१८१॥

१६१. कण निमीलने। काणयति चक्षुः। काणः। भ्वादौ (१।३०२) कणति। मित्त्वात् (द्र० १।५३७) कणयति ॥१८२॥

---

१. धातुवृत्तौ त्वेवं पाठ उद्ध्रियते 'अत्र स्वामी शब्द उपसर्गादाविष्कारे चेति पठित्वा उपसर्गपूर्वाच्छब्द इत्यस्मादाविष्कारे चकाराद् भाषणे च......'
२५ (पृष्ठ ३१०)।

२. धातुवृत्तौ 'प्रतिश्रुतमाविष्करोतीत्यर्थः' इति पाठ उद्ध्रियते (पृष्ठ ३१०)।

३. इदं चन्द्रेण स्वोपज्ञे धातुव्याख्यान एवोक्तं स्यात्।

१६२. जभि नाशने। जम्भयति, जम्भयते। भ्वादौ जभ जभि जम्भने (१।२७३)—जम्भते, जम्भ्यते। चन्द्रो जभ[1] इत्याह। रधिजभोरचि (७।१।६१) इति नुम्—जम्भयितुम् ॥१८३॥

१६३. षूद आस्रवणे[2]। सूदयते। घाते च केचित्—निसूदयति। भ्वादौ क्षरणे (१।२१)—सूदते, सूदः, निसूदितः ॥१८४॥ ५

१६४. जस ताडने। जासिनिप्रहण (२।३।५६) इति चौरस्योज्जासयति। दिवादौ (४।१०५) जस्यति। जसि (१०।११४) इत्युक्तम्—जंसयति ॥१८५॥

१६५. पश बन्धने। पाशयति। भ्वादौ पशति,[3] पशते। उभयत्रापि मूर्धन्यान्त इति दुर्गः ॥१८६॥ १०

१६६. अम रोगे। आमयति। भ्वादौ अम गत्यादिषु (१।३१२) अमति। घटादौ अम रोगे[4] अमयति, अतिशब्दाद् गुणादेशो द्रष्टव्यः[5]। आमयः, आमयते ॥१८७॥

१६७. चट स्फुट भेदे[6]। उच्चाटयति। स्फोटयति। भ्वादौ (१।२२६) स्फोटति। तुदादौ (६।७८) स्फुटति ॥१८८॥ १५

१६८. घट च। १६९. हन्त्यर्थाः। चट स्फुट घट च हन्त्यर्थाः, एते हन्त्यर्थे णिचमुत्पादयन्ति।[7] उच्चाटयति, आस्फोटयति, विघा-

१. मुद्रिते चान्द्रधातुपाठे नोपलभ्यते।

२. 'आप्रवणे' पाठा०।

३. स्वामी भ्वादौ (१।६२६) तालव्यान्तं न पपाठ, एकेषां मते 'पष' इत्याह। २०

४. घटादौ 'न कम्यमिचमाम्' (१।५५६) सूत्रे निर्दिश्यते, 'अम रोगे' इत्येवं न क्वचित् भ्वादौ पठ्यते।

५. अस्याभिप्रायो न ज्ञायते।

६. 'भेदने' इत्युद्ध्रियते पुरुषकारे (पृष्ठ ६२)। २५

७. अत्र पुरुषकारे भूयान् पाठभेदो दृश्यते। तथाहि—'क्षीरस्वामी तु चट स्फुट भेदने। चाटयति, स्फोटयति। घट च—घटधातुश्च भेदने वर्तते। हन्त्यर्थाः हन्त्यर्थाश्च धातवो णिचमुत्पादयन्ति' इत्युक्त्वा दर्शनान्तरमप्याह—'घट च हन्त्यर्थाः।

टयति। अन्ये[1] तु चट इति आस्फुटौ—आस्फोटने चुरादिरिति व्याख्यन्, अन्यत्र भ्वादिः उच्चटयति। केचित्तु हन्त्यर्थाः स्वार्थे चेत्याहुः—घाटयति, तोडयति, गणान्तरपाठाद् वेति—तुदति (६।१)। इत्थं तुदौ हिंसार्थपाठ आत्मनेपदार्थः, घट संघाते इति दुर्गः—संघाटयति। घटे-
५ भ्वादौ (१।५१०) द्युतार्थस्तङर्थो मित्संज्ञार्थश्च पाठः ॥१८९॥

१७०. दिवु अर्दने। परिदेवयति। अन्यत्र दीव्यति (४।१) चन्द्रो दिवु परिकूजने[2] इत्येव सिद्धिमाह[3] ॥१९०॥

१७१. अर्ज प्रतियत्ने। प्रतियत्नः संस्कारः। अर्जयति। भ्वादौ अर्ज सर्ज अर्जने (१।१३८)—अर्जति ॥१९१॥

१० १७२. घुषिर विशब्दने। विशब्दनं विशिष्टशब्दकरणम्। उद्घोषयति। अविशब्दन इत्येके। अपघोषयति पापम्, अपह्नुत इत्यर्थः। इरित्त्वमनित्यण्यन्तत्वे लिङ्गम्—अघुषत्, अघोषीत्, अजूघुषत्। घुष विशब्दने इति कौशिकः। भ्वादौ (१।४३४) घोषति ॥१९२॥

१७३. आङः क्रन्दसातत्ये। चुरादिः[4], आक्रन्दयति। १५ अन्यत्र (१।५८) क्रन्दति ॥१९३॥

१७४. लष[5] शिल्पोपयोगे। लाषयति। भ्रमादिना तक्ष्णोतीत्यर्थः। अन्यत्र लषति, लष्यति (१।६२७)। तालव्यान्त इति कौशिकः—लाशयति ॥१९४॥

---

चट स्फुट धातू द्वौ घट च धातुस्त्रयः, एते हन्त्यर्था हन्तिना समानार्थाः णिचमुत्पाद-
२० यन्ति' इति (पृष्ठ ६२)।

१. वक्ष्यमाणः पाठः शाकटायनस्येति पुरुषकारः (पृष्ठ ६२)।

२. 'परित्यक्तजन'? पाठा०।

३. चन्द्रस्तु 'दिवु परिकूजने' इत्यपि धातुपाठे न पठति, कुतस्ततः सिद्धिः? अयं क्षीरतरङ्गिण्याम् (१०।१५२) सूत्रे पठ्यते।

२५ ४. अत्राह धातुवृत्तिकारः—'स्वामी तु आङ्पूर्वो घुषिः क्रन्द सातत्ये चुरादिः, आघोषयति' (पृष्ठ ३६१)।

५. अत्र पुरुषकारधातुवृत्तिकारप्रौढमनोरमाकारादयः स्वामिमते 'लस' इति दन्त्यं पठित्वा 'लष' इति मूर्धन्यान्तमिति केचित्' इति पठन्ति (पृष्ठ—पु० ११९, धा० ३९१, प्रौ० ६१८)।

१७५. भूष अलंकारे । भूषयति । भ्वादौ (१।४५५) भूषति । तसि भूषेति दुर्गः[1]—उत्तंसयति । अवतंसयति, उत्तंसः, अवतंसः ॥१९५॥

१७६. मोक्ष असने[2] । मोक्षयति शरान् । अन्यत्र (६।१३३) मोक्षते ॥१९६॥

१७७. अर्ह पूजायाम् । अर्हयति, आर्जिहत्, अर्हितम्, अर्हणा । ५ भ्वादौ (१।४८८) अर्हति ॥१९७॥

१७८. ज्ञा नियोजने । आज्ञापयति भृत्यान् । ज्ञापित; ज्ञापना । अन्यत्र (९।३८) जानाति ॥१९८॥

१७९. भज विश्राणने । विश्राणनं दानम् । विश्राणे विवेचन इत्यन्ये । भाजयति, भाजी[3] (द्र० ४।१।४२) अन्यत्र (१।७२५) भजति, १० भजते ॥१९९॥

१८०. शृध अप्रसहने । अप्रसहनम्=अमर्षः । प्रसहने=अभिभवे इत्येके । शर्धयत्यरिम् । अशशधत्, अशीशृधत् । भ्वादौ शृधु शब्दकुत्सायाम् (१।५०६)—शर्धते, तथा शृधु मृधु उन्दे (१।६१३)— शर्धते, शर्धति ॥२००॥ १५

१८१. यत निकारो[4]पस्कारयोः[5] । निकारः[4] खेदनम् । यातयत्यरिम् । यातना तीव्रवेदना । यातयति राजा छिद्रम्, छादयतीत्यर्थः । प्रतियातयति—प्रतिबिम्बयति, प्रतियातना=प्रतिबिम्बम् । भ्वादौ यती प्रयत्ने (१।२६) यतते । निरश्च धान्यधनयोः प्रतिदाने—निर्यातयत्यृणम्, शोधयतीत्यर्थः, धान्यधने उपलक्षणम् ॥२०१॥ २०

---

१. इत्थमेव भ्वादौ (१।४५५) अप्याह स्वामी ।

२. 'सहने' पाठा० ।

३. 'अभिलाषी' इत्यधिकं क्वचित् ।

४. 'निराकार इति तु पाठो दृश्यते, निराकारः परिभव इति च क्षीरस्वामी' इति पुरुषकारोद्धृतः पाठः (पृष्ठ ७६) । दीक्षितोऽपि प्रौढमनोरमायां 'स्वामी तु २५ निकारस्थाने निराकारेति पठित्वा निराकारः परिभव इति व्याख्यद्' इत्याह ( पृष्ठ ६१८ ) । एवं धातुवृत्तिकारोऽपि (पृष्ठ ३९१) । अत्र तु सर्वथैवान्यः पाठ उपलभ्यते ।

५. 'निकारोपसंस्कारयोः' पाठा० ।

१८२. वस स्नेहच्छेदापहरणेषु[1]। वासयति, वासना, वासयति वृक्षम्, वासयत्यरिम्, हन्ति इत्यर्थः। भ्वादौ (१।७३३) वसति, अदादौ (२।१६) वस्ते, वस्त्रम् ॥२०२॥

१८३. चर संशये। विचारयति। विचारणा हि सति संशये ५ भवति। चर असंशय इति दुर्गः। अन्यत्र (१।३७१) चरति ॥२०३॥

१८४. च्यु सहने। च्यावयति। भ्वादौ (१।६८२) च्यवते। च्युस सहन[2] इति एके, हसने च इति एके—च्योसयति ॥२०४॥

१८५. भुवोऽवकल्कने। अवकल्कनम् मिश्रीकरणम्[3]। भावयति दध्नौदनम्[4]। अनित्यण्यन्तत्वार्थम्पञ्चमी। विकल्कने इति नन्दी— १० भावयेद् ब्राह्मणन्तपः, भावितम्। भू प्राप्तावात्मनेपदी (१०।२३१) विभाषा णिच्—भावयते, भवते। भू सत्तायाम् (१।१) भवति ॥२०५॥

१८६. कृपेस् तादर्थ्ये। तादर्थ्यम् उद्देशविषयम्[5]। कल्पयति देवताभ्यो हविः, संकल्पयति। भ्वादौ कृपू सामर्थ्ये (१।५०८)— कल्पते तादर्थ्येऽवकल्कन इत्येके। अत एव भू कृप अवकल्कने इति दुर्गः। चन्द्रो ह्यव- १५ व्यवकल्कने=चिन्तन इति व्याख्यत्[6]—सम्भावयति, अवकल्पयति ॥२०६॥

---

१. 'स्नेहच्छेदावहननेषु' पाठा०।

२. 'हानौ' पाठा०।

३. उद्धृतम्—धातुवृत्तौ (पृष्ठ ३९२) पुरुषकारे (पृष्ठ १२) च।

२० ४. 'भावयति क्षीरेण घृतम्' इति पुरुषकारे पाठः (पृष्ठ १२)।

५. अत्र पुरुषकार इत्थमुद्ध्रियते—'स्वामी तु कृपेर्योऽर्थस्तदर्थभाव इति व्याख्यामवकल्पयति इत्युदाहरणं च समर्थो भवति इति व्याचष्ट' (पृष्ठ १२, १३)। धातुवृत्तौ (पृष्ठ ३९२) प्रौढमनोरमायां (पृष्ठ ६१९) चेत्थं स्वामिपाठो निर्दिश्यते—'क्षीरस्वामी तु कृपेस्तादर्थ्ये इति पठित्वा तादर्थ्य इति प्रस्तुतस्य भुवोऽर्थे मिश्रीकरणे, २५ अथवा तच्छब्देन क्लृपिः परामृश्यते। तस्य योऽर्थः सामर्थ्यलक्षणः, तस्मिन्निति द्वेधा व्याख्यद्' इति।

६. चान्द्रधातुपाठे नैवेमौ धातू पठ्येते। कुत्र चन्द्रेणैतद् व्याख्यातमित्यपि विचारार्हम्।

**१८७. रग लग आस्वादने**[1] । रागयति, लागयति । अन्यत्रार्थे घटादी रगे शङ्कायाम्, लगे सङ्गे (१।५३२, ५३३)—रगति, लगति, रगयति, लगयति । रक लकेति चन्द्रः,[2] आसादने[3] इति दुर्गः ॥२०७॥

**१८८. अन्चु विशेषणे** । विशेषणम्—अतिशयः । अञ्चयत्यर्थान्, व्यक्तीकरोत्यर्थः । भ्वादौ अन्चु गतौ (१।११९)—अञ्चति ॥२०८॥ ५

**१८९. लिगि चित्रीकरणे** । लिङ्गयति, उल्लिङ्गयति, लिङ्गम् । भ्वादौ लिगि गत्यर्थः (१।९१)—आलिङ्गति ॥२०९॥

**१९०. मुद संसर्गे** । मोदयति सर्पिषा सक्तून् । मोदकः । भ्वादौ मुद हर्षे (१।१६)—मोदते ॥२१०॥

**१९१. उध्रस उञ्छे** । क्र्यादिः (९।५६) एवायं स्वार्थणिजर्थः १० पठित इत्युदित्त्वम्—ध्रासयति, ध्रस्नाति । प्रयोगसमवायीत्येके—उद्ध्रासयति, उद्ध्रस्नाति ॥२११॥

**१९२. मुच प्रमोचने** । मोचयति शरान् । भ्वादौ मुच कल्कने (१।१०५)—मोचते, तुदादौ मुच्लृ मोक्षणे (६।१३३)—मुञ्चते, मुञ्चति ॥२१२॥ १५

**१९३. आस्वदः सकर्मकात्** । ष्वद संवरणे (१०।२००) इति वक्ष्यति, आ एतस्मात् इत ऊर्ध्वं सकर्मकाण्णिच् क्रियते[4]। शाकटायनस्त्वाङ्पूर्वात् स्वादेराह[5]—आस्वादयति दधि, अन्यत्र भ्वादित्वात् (१।१८) स्वदते, स्वादमनुभवतीत्यर्थः ।

---

१. 'आच्छादने' पाठा० । २०

२. चान्द्रधातुपाठे नैव पठ्यते ।

३. 'आस्वादने' पाठा० । दौर्गधातुपाठस्यास्मद्धस्तलेखे नायं धातुः पठ्यते । अतः पाठशुद्धिः कीदृशीति न ज्ञायते ।

४. अत्र पुरुषकारधातुवृत्तिकारप्रौढमनोरमाकाराः स्वामिपक्षे 'आङ्पूर्वात् स्वदेः सकर्मकाण्णिज् भवति । पय आस्वादयति' इति पाठमुद्दध्रिरे (पृष्ठ—पु० ४४, २५ धा० ३६२, प्रौ० ३१९) । अत्र तु न तथोपलभ्यते ।

५. काशकृत्स्नः 'स्वद आस्वादने, आस्वादः सकर्मकात्तु' इति पठन् (पृष्ठ २८१) नायमभिविधावाङ् इति स्पष्टमुद्घोषयति । तथैव शाकटायनोऽपि व्याचष्टे ।

**१९४. ग्रस ग्रहणे ।** ग्रासयति [फलम्] । त्रस वारणे इति दुर्गः—त्रासयति मृगान् । धारण इति नन्दी, ग्रहण इत्येके । अन्यत्र (४।९) त्रसति त्रस्यति ॥२१२॥

**१९५. पुष धारणे ।** पोषयत्याभरणान् । भ्वादौ (१।४६२) पोषति, दिवादौ (४।७३) पुष्यति, क्र्यादौ (९।६०) पुष्णाति ॥२१३॥

**१९६. दल विदारणे ।** दालयति दारु । दालपः, दाल्मिः । भ्वादौ दल विशरणे (१।३६६)—दलति, मित्त्वाद् (द्र० १।५५२ व्याख्यानम्) दलयति ॥२१४॥

**१९७. पट पुट रुट लुट तुजि पिजि लजि लुजि अजि कुसि कुशि त्रसि दसि दशि घटि रघि लघि अहि बहि महि गुपू धूप विच्छ चीव बर्ह बल्ह पुथ लोकृ लोचृ णद कुप तर्क वृतु वृधु भासार्थाः ।** एते सकर्मका भासार्था[1] णिचमुत्पादयन्ति । पाटयति, फलिपाटि (उ० १।१८) इति पटुः, भ्वादौ (१।१९८) पटति । एषां गणान्तरे पाठः सकर्मकत्वेऽपि णिज्विकल्पार्थः, इहैव पठितांस्तु न्याय्यविकरणान् प्रत्युदाहरन्ति—त्रंसति, कुंसतीति । पोटयति, तुदादौ (६।७२) पुटति । रोटयति, लोटयति, भ्वादौ (१।४९७ पाठा०) रोटते, लोटते, दिवादौ लुट प्रतिघाते (४।११६) लुट्यति । तुञ्जयति, भ्वादौ (१।१५४) तुञ्जति । पिञ्जयति अदादौ (२।२० पाठा०) पिङ्क्ते । लञ्जयति[2], लञ्जति । लुञ्जयति, लुञ्जति । अञ्जयति, रुधादौ (७।२६) अङ्क्ते, व्यनक्ति । कुंसयति, कुंसति, भ्रुकुंस, भ्रुकुंशः । कुंशयति, कुंशति । त्रंसयति, त्रंसति । दंसयति, दंसति । दंशयति, भ्वादौ दन्श दशने (१।७१६) दशति । घण्टयति, घण्टति, घण्टा । रङ्घयति, लङ्घयति, भ्वादौ (१।७५) रङ्घते, लङ्घते । अंहयति, बंहयति, मंहयति, भ्वादौ अहि गतौ, बहि महि वृद्धौ (१।४२१, ४२०)—अंहते, बंहते, मंहते । गोपयति, धूपयति, विच्छयति, भ्वादौ (१।२८०,

---

१. अत्राह धातुवृत्तिकारः—'तथा च क्षीरस्वामी—भासा दीप्तिरर्थो येषां ते भासार्थाः इति' (पृष्ठ ३६३) । नात्रायं पाठ उपलभ्यते ।

२. सस्मार पुरुषकारः (पृष्ठ ६१) ।

२८१।६।१२६) गोपायति, धूपायति, विच्छायति, गुपूधूपविच्छ (३।१।२८) इत्यायः। चीवयति, भ्वादौ चीव आदाने (तु० १।६२८)—चीवति। बर्हयति, बल्हयति, भ्वादौ बर्ह बल्ह प्राधान्ये (१।४२३)—बर्हते, बल्हते। पोथयति, दिवादौ पुथ हिंसायाम् (४।११)—पुथ्यति। विलोकयति, आलोचयति, भ्वादौ (१।६३, १००) लोकते, लोचते। नादयति, भ्वादौ (१।४५) नदति। कोपयति, दिवादौ (४।१२६) कुप्यति। तर्कयति, वितर्कः, तर्कितः। वर्तयति, वर्धयति, भ्वादौ (१।४०४, ४०५) वर्तते, वर्धते। अन्ये भजिपिसिलडिबृंहितडिनटादीन् पठन्ति—भञ्जयति,रुधादौ (७।२१) भनक्ति। पिंसयति, पिंसति। लण्डयति, लण्डति। बृंहयति, भ्वादौ (१।४८९) बृंहते[1]। ताडयति, तडति। नाटयति, नटति, भ्वादावात्मनेपदीति नन्दी—नटते। पटादयः सकर्मकाः स्वार्थे णिचमुत्पादयन्ति भासार्थाश्चेति पारायणम्—भासयति दिशः—दीपयति, इन्धयति, प्रकाशयति। गणान्तरपाठस्त्वेषां कार्यान्तरार्थः ॥२१५, २१६—२४९॥

१९८. पूरी आप्यायने। पूरयति, दिवादौ (४।४१) पूर्यते ॥२५०॥

१९९. रुज हिंसायाम्। रोजयति। तुदादौ रुजो भङ्गे (६।१२०)-रुजति ॥२५१॥

२००. ष्वद संवरणे[2]। स्वादयति, सिस्वादयिषति (द्र० ८। )। भ्वादौ ष्वद आस्वादने (१।१८) स्वदते ॥२५२॥

सकर्मकपर्यङ्कः। अत्र च द्विचत्वारिंशतिसूत्रेषु सप्तसप्ततिर्धातवः।

२०१. आ धृषाद्वा। धृष अप्रसहने (१०।२३८) इति वक्ष्यति, आ एतस्माद् इत उत्तरेभ्यो णिज् वा भवतीत्यधिक्रियते। पक्षे न्याय्यो विकरणः शप्। इह नियमेन णिचो विकल्पः। अनित्यण्यन्तत्वं तु यथालक्ष्यम्, क्वचिद् विकल्पार्थम्।

२०२. युज पृची सम्पर्चने[3]। योजयति, योजति, दिवादौ

---

१. भ्वादौ परस्मैपदिषु पठ्यते तेन 'बृंहति' इति साधु स्यात्।

२. उद्धृतं धातुवृत्तौ (पृष्ठ ३९४)।

३. 'संबन्धने इति क्षीरस्वामी' इति पुरुषकारः (पृ० ५२)।

युज समाधौ (४।६७) युज्यते, रुधादौ युजिर् योगे (७।७)—युनक्ति । सम्पर्चयति, रुधादौ (७।३०) सम्पृणक्ति, अदादौ पृची सम्पर्के (२।२१) संपृक्ते ॥२५३, २५४॥

२०३. अर्च पूजायाम्[1]। अर्चयति, अर्चति ॥२५५॥

५ २०४. षह मर्षणे । साहयति, सहति । यथा—स एवायं नागः सहति कलभेभ्यः परिभवम् (सुभाषित--६३१) भ्वादौ ( १।५९० ) सहते ॥२५६॥

२०५. ईर क्षेपे । क्षेपः प्रेरणम् । ईरयति, ईरति । अदादौ (२।११) ईर्ते ॥२५७॥

१० २०६. ली द्रवीकरणे । विलालयति,[2] विलापयति । विलाययति, विलयति, विलयः विलायितम् । लियो वा[3] इति व्यवस्थितविभाषात्त्वाद् विलम्भनपूजाभिभवेभ्योऽन्यत्रात्वं नास्तीत्यैत्वार्थौ, विलम्भनादावेवात्त्वं पुक् च—कस्त्वमुल्लापयते ? आलापयति, अपलापयते, लियः संमाननशालीनीकरणयोश्च (१।३।७०) इति

१५ तङ्, स्नेहविपातने[4] नुक् (तु० ७।३।३९) घृतं विलीनयति । दिवादौ लीङ् श्लेषणे (४।२६)—लीयते क्र्यादौ (९।३२) लिनाति ॥२५८॥

२०७. वृजी वर्जने । वर्जयति, वर्जति । अदादौ (२।२० व्याख्याने) वृक्ते, रुधादौ (७।२९) वृणक्ति ॥२५९॥

२०८. वृञ् आवरणे । [5] आवारयति; आवरति, आवरते ।

२० स्वादौ (५।१) वृणुते,वृणोति,क्र्यादौ वृङ् सम्भक्तौ (९।४२) वृणीते[5]॥२६०॥

२०९. जॄ वयोहानौ । जारयति, जरति, जारणा । दिवादौ (४।२०) जीर्यति, जीर्णः । क्र्यादौ (९।२४) जृणाति । ज्रि इति च नन्दी–ज्राययति, ज्रयति. क्र्यादौ ज्रिणाति ॥२६१॥

---

१. अत्र बालमनोरमा द्रष्टव्या चुरादि १८०९ ।

२५ २. 'विलीनयति' पाठा० ।

३. कुत्रत्यं सूत्रमिति न ज्ञायते । पाणिनीयं तु 'विभाषा लीयतेः' (६।१।५१) द्रष्टव्यम् । ४. 'विपातने' पाठान्तरम् ।

५. 'आवारयति·········वृणीते' पुरुषकारे (पृष्ठ ३९) उद्धृतः । तत्रैव चेतोऽग्रे 'तुदादौ वृङ् संभक्तौ व्रियेत इति' इत्यधिकं पठ्यते, तदत्र नास्ति ।

२१०. रिच वियोजन-सम्पर्चनयोः । रेचयति, रेचति । रुधादौ (७।४) रिणक्ति[1] ॥२६२॥

२११. शिष असर्वोपयोगे । असर्वोपयोगोऽनुपयुक्तत्वम् । शेषयति, शेषति । विपूर्वोऽतिशये । अतिशय उत्कर्षः । विशेषयति, विशेषति, व्यशेषीत् । रुधादौ शिष्लृ विशेषणे (७।१६) विशिनष्टि, व्यशिषत् ॥२६३॥ ५

२१२. तप दाहे । तापयति, तपति ॥२६४॥

२१३. तृप दृप संदीपने[2]। तर्पयति, तर्पति । दिवादौ तृप प्रीतौ (४।८६) तृप्यति । स्वादौ तृप्नोति[3]। दर्पयति, दर्पति । दिवादौ (४।८७) दृप्यति । चृत छृदेत्येके–चर्तयति, चर्तति; छर्दयति, छर्दति ॥२६५,२६६॥ १०

२१४. दृभी भये । दर्भयति, दर्भति । क्र्यादौ दृभी ग्रन्थे—दृभ्णाति[4] ॥२६७॥

२१५. छद संवरणे[5] । छादयति, छदति । अर्जने घटादिः (१।५५०)—छदयति ॥२६८॥

२१६. श्रथ हिंसायाम् । श्राथयति, श्रथति । श्रन्थेत्येके—श्रन्थयति, श्रन्थति ॥२६९॥ १५

२१७. मी गतौ[6]; मनने । माययति, मयति । दिवादौ (४।२७) मीयते, क्र्यादौ (९।४) मीनाति ॥२७०॥

२१८. क्रथ हिंसायाम् । क्राथयति, क्रथति । भ्वादौ (१।५३९) मित्—क्रथयति ॥२७१॥ २०

---

१. इतोऽग्रे 'रिङ्क्ते' इत्यधिकम् ।

२. उद्धृतं धातुवृत्तौ (पृष्ठ ३१४) ।

३. क्षीरस्वामी स्वादौ तृपधातुं न पठति । काशकृत्स्ने (पृष्ठ २११) दौर्गे च धातुपाठे 'धिवि तृप प्रीणने' इति पठ्यते । पाणिनिः क्षुभ्नादिषु (गण० ८।४।३९) तृप्नोतिशब्दं पठति । तेनास्य स्वादिपाठो युक्तः प्रतिभाति । २५

४. क्षीरतरङ्गिण्यां क्र्यादौ दृभी ग्रन्थे न पठ्यते । तुदादौ (६।३५) पठ्यते, तेन दृभति इति युक्तम् । ५. अत्र १०।३७ टिप्पणी द्रष्टव्या ।

६. उद्धृतं पुरुषकारे (पृष्ठ २७) ।

**२१९. शीक आमर्षणे** । शीकयति, शीकति, अशीशिकत् । भ्वादौ शीकृ सेचने (१।६२)—शीकते, अशिशीकत् ॥२७२॥

**२२०. अर्द हिसि हिंसायाम्** । अर्दयति, अर्दति । हिंसयति, हिंसति । रुधादौ (७।२४) हिनस्ति ॥२७३, २७४॥

५ **२२१. आङः षद पद्यर्थे** । पद्यतेरर्थो गतिः । आसादयति, आसदति,[1] आसीदतीत्येके । अन्यत्र (१।५९४) सीदति ॥२७५॥

**२२२. शुन्ध शौचकरणे** । शुन्धयति, शुन्धति ॥२७६॥

**२२३. जुष परितर्पणे**[2] । जोषयति, तुदादौ जुषी प्रीतिसेवनयोः (६।१०)—जुषते ॥२७७॥

१० **२२४. धूञ् कम्पने** । धूनयति, 'धावयति' इत्येके[3] । धवते, धवति, धूनितः । स्वादौ (५।१०) धुनोति, धूनोति । तुदादौ (६।९८) धुवति, क्र्यादौ (९।१६) धुनाति ॥२७८॥

**२२५. प्रीञ् तर्पणे** । प्रीणयति,[4] प्रीञ्धूञोर्नुक् च साहचर्यात् (तु० ७।३।३७ वा०) प्राययति इत्येके, प्रयते, प्रयति, प्रीणितः

१५ दिवादौ प्रीङ् प्रीतौ (४।३४)—प्रीयते, क्र्यादौ (९।२) प्रीणाति, प्रीणीते ॥२७९॥

**२२६. श्रन्थ ग्रन्थ संदर्भे** । संदर्भो बन्धनम् । श्रन्थयति, ग्रन्थयति । श्रन्थति, ग्रन्थति । भ्वादौ श्रथि शैथिल्ये, ग्रथि कौटिल्ये (१।२९,३०) श्रन्थते, ग्रन्थते । क्र्यादौ (९।४४, ४६) श्रथ्नाति, ग्रथ्नाति ॥२८०,२८१॥

२० **२२७. आप्लृ लम्भने** । लम्भनं प्राप्तिः । आपयति, आपति, आपितम् । स्वादौ व्याप्तौ (५।१७) आप्नोति । आप्तम् ॥२८२॥

---

१. द्र० 'अभिषदेत्' काश्यप-संहिता (पृष्ठ ४१) ।

२. 'परितर्पणे परिचर्यिक्रियायाम् इति क्षीरस्वामी' इति पुरुषकारे (पृष्ठ ११७) धातुवृत्तौ (पृष्ठ ३९५) च पाठ उद्ध्रियेत, तच्च नात्र दृश्यते ।

२५ ३. उद्धृतं पुरुषकारे (पृष्ठ ३४) ।

४. स्मृतं पुरुषकारे (पृष्ठ ३०) धातुवृत्तौ (पृष्ठ ३९५) च ।

**२२८. तनु श्रद्धोपकरणयोः ।** तानयति, तनति, तत्त्वा, तनित्वा, नितान्तम् । तनादौ तनु विस्तारे (८।१) तनुते, तनोति, ततः ।

**२२९. उपसर्गाच्च दैर्घ्ये ।** चकारं भिन्नक्रममाहुः[1]–प्रतानयति, आतानयति, प्रतनति । वन श्रद्धोपहिंसनयोरिति चान्द्रं पारायणम्–वानयति, उपसर्गात्तूद्वानयति, तच्च भ्वादौ वन शब्दे (१।३११) इत्येव सिद्धम् ॥२८३॥ ५

**२३०. वद संदेशने ।** वादयति, वदति[2], वद्यते । भ्वादौ (१।७३९) वदति, वदते,[3] यजादित्वात् (६।१।१५) संप्रसारणम्—उद्यते । चन्द्रो वचेत्यपाठीत्[4] ॥२८४॥

**२३१. मान पूजायाम् ।** मानयति, मानति । भ्वादौ[5](१।६९८) मीमांसते ॥२८५॥ १०

**२३२. भू प्राप्तावात्मनेपदी वा[6] ।** सम्भावयते, सम्भवते, इत्थम्भूतः । भुवोऽवकल्कने (१०।१८५)—भावयति, भ्वादौ (१।१) भवति पाठादेव सिद्धे वावचनमणिच्संनियोगेऽपि तङर्थम्—याचितारश्च नः सन्तु दातारश्च भवामहै[7] ॥२८६॥ १५

**२३३. वच भाषणे ।** वाचयति, वचति, वाच्यते, वच्यते ।

---

१. 'चकाराद् विभाषामाह' पाठा० । अत्र 'चकारो भिन्नक्रमः, प्रत्ययार्थं समुच्चिनोति' इति काशिकापाठो (४।४।३६) द्रष्टव्यः । यथा 'पक्षिमत्स्यमृगान् हन्ति, परिपन्थं च तिष्ठति' (४।४।३५, ३६) इति श्लोकानुरोधेन चकारः क्रमं भित्त्वा तिष्ठतेः प्राक् पठ्यते, तथैव 'उपसर्गाच्च दैर्घ्ये' इत्यपि कस्यचिच्छ्लोकबद्ध-धातुपाठस्यांशः प्रतीयते, तदनुरोधेनैव चात्र चकारो दैर्घ्ये' इत्यतः प्राक् पठ्यते । २०

२. 'संवादयति, संवदति' पाठा० ।

३. भ्वादौ परस्मैपदिषु पठ्यते । तेन 'वदति' इत्येव युक्तम् । काशकृत्स्ने धातुपाठे तूभयपदिषु पठ्यते (पृष्ठ १६१) ।

४. क्वापाठीदिति न ज्ञायते । २५

५. इतोऽग्रे 'विचारे' इत्यधिकम् ।

६. सर्वकोशेषु विद्यमानं, क्षीरस्वामिना च व्याख्यायमानं 'वा' पदं लिपि-क्लेशेन भ्रान्त्या निष्कासितम् ।

७. आत्मनेपदं महता प्रपञ्चेन निराकृतं पुरुषकारे (पृष्ठ १२) ।

चन्द्रः संदेशे चुरादिमाह । अदादौ (२।५७) वक्ति, उच्यते, स्वपिस्यह-चर्याद् (६।१।१५) आदादिकस्य सम्प्रसारणम् ॥२८७॥

**२३४. गर्ह विनिन्दने ।** गर्हयति, गर्हति । भ्वादौ (१।४२२) गर्हते ॥२८८॥

५ **२३५. मार्ग अन्वेषणे ।** मार्गयति, मार्गति[1] । मृग अन्वेषणे (१०।२८३)—मृगयते ॥२८९॥

**२३६. कठि शोके ।** उत्कण्ठयति, उत्कंठति । भ्वादौ (१।१६७) उत्कंठते ॥२९०॥

**२३७. मृजूष्[2] शौचालंकारयोः ।** मार्जयति, मार्जति, मार्जना, मार्जिता, रसाला चेति लोकः । अदादौ ( २।६१ ) संमार्ष्टि, न १० लुमताङ्गस्य (१।१।६१) इत्यस्यानित्यत्वात् मृजेरात् ॥२९१॥

**२३८. मृष तितिक्षायाम् ।** मर्षयति, मर्षति । दिवादौ (४।५४) मृष्यति । केचिद् अमुमदन्तत्वोपजीवनार्थं व्यत्यस्य पठन्ति[3]—मृषयति, मृषति ॥२९२॥

१५ **२३९. धृष अप्रसहने ।** अप्रसहनमभिभवः, अत एव प्रसहन इति युक्तम्[4] । धर्षयति, धर्षति, प्रधृष्टः, प्रधर्षितः । स्वादौ ञिधृषा प्रागल्भ्ये (५।२६) धृष्णोति ॥२९३॥

सप्तत्रिंशतिसूत्रेषु चत्वारिंशताधातुभिराधृषीयपर्यष्टकः ।

**२४०. अदन्ताः ।** इत आ गणान्ताद् इत्संज्ञानिषेधार्थम-२० दन्तत्वं विधीयते, ततश्च अतो लोपः (६।४।४८) इत्यल्लोपस्य स्थानिवत्त्वाद् वृद्ध्याद्यभावः—कथयति, कथकः, बहुवचनाद्[5] वटिलजिप्रभृ-

---

१. इतोऽग्रे 'संस्कारे च—मार्गयति वाससी' इत्यधिकं क्वचित् ।

२. 'मृजूष् इति क्षीरस्वामी, षकारोऽनर्थं इति च' इत्युद्धृत्य प्रत्याख्यातवान् पुरुषकारः—'तच्चिन्त्यम्—मृजति मिदादिपाठात् सिद्धेः' इति (पृष्ठ ५७) । २५ 'षकारोऽनर्थः' इति नात्र पठ्यते ।

३. 'अथादन्ताः' इत्युत्तरसूत्रानन्तरमित्यर्थः । ४. 'इत्युक्तम्' पाठा० ।

५. 'अथादन्ताः' इति सूत्र इति शेषः । नादन्तात् सन् इति काशकृत्स्नाः प्रतिजानते । (का० धातु० २८२) ।

तीनाम् (१०।३०५, ३०६) अकारान्तागमो भवतीति द्रमिडाः—वण्टापयति, लज्जापयति।

**२४१. कथ वाक्यप्रतिबन्धे** । प्रतिबन्धो विच्छेदोदीरणात्, अत एव वाक्यप्रबन्ध इत्येके पेठुः। कथयति । अल्लोपात्परापि वृद्धिर्नास्ति, परशब्दस्येष्टवाचित्वात् (१।४।२ भाष्ये) चिन्तपूजि (३।३।१०५) इत्यङ्—कथा—णेरनिटि (६।४।५१) इति लोपः, कथकः, संकथय्य, ल्यपि लघुपूर्वात् (६।४।५६) इत्यत्। अचकथत् सन्वल्लघुनि (७।४।९३) इति नास्त्यग्लोपित्वात्। कथमचीकथत्? प्रकृत्यन्तरं[1] अन्वेष्यम् ॥२९४॥

**२४२. वर ईप्सायाम्** । कन्यां वरयति, वरः । चुरादिवृञो (१०।२०८) वारयति, वरति, वरते, स्वादौ वृञ् वरणे (५।८)—वृणोति, वृणुते, क्र्यादौ वृङ् सम्भक्तौ (९।४२) वृणीते ॥२९५॥

**२४३. गण संख्याने**। गणयति। ई च गणः (७।४।९७) अजीगणत्, अजगणत्। गणकः, गणिका, गणः, गणना, गणनम् ॥२९६॥

**२४४. शठ श्वठ असम्यगाभाषणे**[2] । शठयति, श्वठयति । भ्वादौ शठ कैतवे (१।२३६)—शठति, हेतौ शाठयति, श्वठ गतौ (१०।२६) इतीहत्यस्य श्वाठयति ॥२९७, २९८॥

**२४५. पट वट ग्रन्थे**। ग्रन्थो वेष्टनम्[3] । पटयति रज्जुम्, वटयति। पटादिदण्डके (१०।१९७) पाटयति। भ्वादौ भ्रट पट गतौ वट वेष्टने (१।१९८, २०२) पटति, वटति, हेतौ—पाटयति, वाटयति ॥२९९, ३००॥

**२४६. रह त्यागे**। रहयति। विरहः। (१।४८३) रहति, हेतौ राहयति ॥३०१॥

---

१. स्मृतं प्रक्रियाकौमुद्याम् (पृष्ठ २९५)।

२. अत्र पुरुषकारः 'सम्यगाभाषणे सम्यग्वचनक्रियायामिति क्षीरस्वामी' इति क्षीरपाठमुद्धरति (पृष्ठ ६६)। न च तथात्र दृश्यते। युक्तश्चायमेव पाठः। काशकृत्स्नदुर्गावपि 'शठ श्वठ सम्यगाभाषणे' इति पेठतुः (काश० धातु० पृ० २८२)।

३. स्मृतं पुरुषकारे (पृष्ठ ६७) धातुवृत्तौ (पृष्ठ ३९७) च।

**२४७. रहि गतौ ।** रंहयति, रंहापयति । भ्वादौ (१।४८४) रंहति ॥३०२॥

**२४८. स्तन गदी देवशब्दे ।** देवोऽभ्रम् । गदिर् इक्श्तिपौ धातुनिर्देशे (३।३।१०२ वा०), इदित्वन्त्वयुक्तम्, अणिच्पक्षे गत्तादिरूपा-
५ दर्शनात् । अत एव स्तन[1] गद शब्दे इति चन्द्रः (तु० चा० धा० १०।८३) । स्तनयति,गदयति,अजगदत् । स्तनिहृषिपुषिगदि (उ० ३।२९) इति णेरित्नुच् स्तनयित्नुः, गदयित्नुः । भ्वादौ (१।३१०; ४३) स्तनति, गदति, हेतौ स्तानयति, गादयति, अजीगदत् ॥३०३, ३०४॥

**२४९. पत गतौ वा ।** पतयति, पतति, अपपतत्, अपातीत् ।
१० स्पृहिगृहिपति (३।२।१५८) इत्यालुच्—पतयालुः । भ्वादौ (१।५८०) पतति, अपप्तत् । अन्ये पत ऐश्वर्ये इति पेठुः, वाशब्दस्तूत्तैरकदेशार्थः[2] 'वावृतुवत्' ॥३०५॥

**२५०. पश अनुपसर्गात् ।** गतावित्येव, अर्थानिर्देशात् । अनार्षोऽयमिति चन्द्रः । भ्वादेश्चुरादेश्चानुपसर्गस्य पशे णिच्यदन्तत्वविधिरित्येके—पश-
१५ यति । उपसर्गान्नास्ति प्रपशति । पशोऽनुपसर्गाद् वादन्त इत्येके—पशयति, पाशयति । मूर्धन्यान्तोऽयमिति नन्दी ॥३०६॥

**२५१. स्वर आक्षेपे ।** स्वरयति । भ्वादौ स्वृ शब्दोपतापयोः (१।६६४)—स्वरति, हेतौ स्वारयति ॥३०७॥

**२५२. रच प्रतियत्ने ।** रचयति । रचना ॥३०८॥

---

२० १ मुद्रिते चान्द्रधातुपाठे 'ष्टन' षोपदेशः पठ्यते । अत्राह पुरुषकारः—'न चास्यापि दन्त्यपरसादित्वात् षोपदेशत्वम् ? स्म्याद्येकाच्साहचर्यादनेकाचां नैतदित्याहुः' (पृष्ठ ९२) ।

२. स्मरति धातुवृत्तिकारः (पृष्ठ ३९७), निराचष्टे च । अत्रेदमवधेयम्—यथा 'तप ऐश्वर्ये वावृतु वरणे' (४। ४८; ४९) इत्यत्र पक्षान्तरे वा शब्दः वृतुना
२५ संयोज्य 'वावृतु' धातुः स्वीक्रियते, न तथाऽत्र वा शब्द उत्तरधातुना संयुज्य 'वापश' इति रूपमाप्नोति । अत्र 'वा' निपातः पृथगेव विकल्पार्थं ब्रवीति । तस्माद् 'वावृतुवत्' इति स्वामिवचनमयुक्तम् । धातुवृत्तिकारस्त्वादौ 'वा' शब्दप्रयोगमसहमानो निराचष्टे (पृष्ठ ३९७) । श्लोकबद्धधातुपाठानुरोधेन यथा चकारोऽनेकत्र भिन्नक्रमः पठ्यते, तथा 'वा' पदस्यापि पूर्वनिर्देशः उपपद्यते ।

**२५३. कल गतौ संख्याने च।** कलयति[1] । भ्वादौ कल शब्दसंख्यानयोः (१।३३२)--कलते, हेतौ कालयति, क्षेपार्थात् (१०।५९)—कालयति गाम् ॥३०९॥

**२५४. चह कल्कने।** कल्कनं दम्भनम्। चहयति,अचचहत्। भ्वादौ (१।४८२) चहति, अचीचहत् ॥३१०॥ ५

**२५५. मह पूजायाम्।** महयति, भ्वादौ[2] महति, कण्ड्वादौ (गण० ३। १। २७) महीङ्—महीयते । अविमह्योष्टिषच् (उ० १।५)—महिषः। महेरिनश्च (तु० उ० २। ६६) महिनः । श्वन्नुक्षन् (उ० १।१५६) इति मघवन् । वर्तमाने पृषद्बृहत् (उ० २। ८४)—महत् । पुंसि संज्ञायां घः (३।३।११८)—मही ॥३११॥ १०

**२५६. शार कृप श्रथ दौर्बल्ये।** शारयति, अशशारत् । क्र्याद्रौ शॄ (९।१७)—शृणाति, अशीशरत्। शर इति नन्दी, अदन्तपाठो नाग्लोपि (७।४।२) इत्यर्थः—अशशरत्। सारेति दुर्गः। कृपयति, अचकृपत्, [कृपणः], कृपणा । अङ्गिवधौ (द्र० ३।३।१०४) कृपा, कृपेस्तादर्थ्ये[3] लः—कल्पयति। भ्वादौ कृपू सामर्थ्ये (१।४०८)—कल्पते । १५ श्रन्थयति। कपिरिकादित्वात् (तु० ८।२।१८ भा०) श्लथयति। श्रथ प्रतिहर्षे (१०।१३)—श्राथयति ॥३१२-३१४॥

**२५७. स्पृह ईप्सायाम्।** स्पृहेरीप्सितः (१।४।३६) सम्प्रदानम्—पुष्पेभ्यः स्पृहयति। स्पृहिगृहि (३।२।१५८) इत्यालुच्—स्पृहयालुः ।३१५।

**२५८. भाम क्रोधे।** भामयति, अबभामत्। भ्वादौ (१।२९८) २० भामते, अबीभमत् ॥३१६॥

**२५९. सूच पैशुन्ये।** सूचयति, असुसूचत् । सूचकः। सूचट् (गण० ३।१।१३४)—सूची, सूचिः। सूचेः स्मन्[4] (तु० ४।१७७) सूक्ष्मम्।

---

१. 'दिशं ताराश्च' इत्यधिकं क्वचित् ।

२. नोपलभ्यते क्षीरतरङ्गिण्याम् । २५

३. अत्र लिबिशेन चौरादिकस्य सूत्रस्य (१८६) संख्या निर्दिष्टा। यथा त्वत्र पाठस्तथाऽनेन लत्वं विधीयते। इदं लत्वविधायकं सूत्रं कस्त्यमिति न ज्ञायते।

४. 'स्मन्' इत्येव युक्तः पाठः, तेनैव 'सूक्ष्म' पदनिष्पत्तेः ।

सूचिसूत्रि (३।१।२२ वा०) इति यङ्—सोसूच्यते। एकाचाम् एव षोपदेशत्वं स्मि[1] प्रभृतिभिः साहचर्यादाहुः, [2]अतः सूच-सूत्र-संग्राम-सान्त्व-साम-समाज-स्थूल-स्तन-स्तेन-स्तोमानां षत्वं नास्ति। विषूचिका सुषामादौ (गण० ८।३।९८) ॥३१७॥

५ २६०. खेट भक्षणे। खेटयति, अचिखेठत्। खेटो ग्रामः। भ्वादौ खिट उत्रासे (१।२०३)—खेटति, अचीखिटत्। आखेटः। खेड इति दौर्गाः ॥३१८॥

२६१. खोड क्षेपे। खोडयति। खोट खोडेति पाठभेदः ॥३१९॥

२६२. गोम उपलेपने। गोमयति क्ष्माम्। गोमयम्। प्रकृति-
१० प्रत्ययविभागस्य काल्पनिकत्त्वात्कस्मिंश्चित्काले गोमाद् गोमयसिद्धिः, अथत्वे तु 'गोश्च पुरीषे' (४।३।१४५) मयट्। एवं कुमारादावनुमन्तव्यम् ॥३२०॥

२६३. कुमार क्रीडायाम्। कुमारयति। कुमारयतीति कुमारः, कुत्सितो मारो यस्य वा ॥३२१॥

२६४. शील उपधारणे। उपधारणमभ्यासः परिचय इत्येके।
१५ शीलयति, अशिशीलत्। भ्वादौ शील समाधौ (१।३४८)—शीलति, अशीशिलत् ॥३२२॥

२६५. साम सान्तने। सान्तनं प्रीणनम्। सामयति, अससामत्। साम सान्त्वप्रयोगे (१०।२६ चान्द्रमते) इत्यस्यासीसमत्। नामन्सामन् (दश० उ० ६।७६) ॥३२३॥

२० २६६. वेल कालोपदेशे। वेलयति, अविवेलत। भ्वादौ वेलृ गतौ (तु० १।३६०)—वेलति, वेला, तस्याप्यृदित्त्वाद् (द्र० ७४।२) अविवेलत्। तेनात्रैनं चन्द्रो नाध्यैष्ट ॥३२४॥

---

१. 'स्मिङ् प्रभृतिभिः' पाठा०।

२. द्र० पूर्वं पृष्ठ १६४ टि० २।

२५ ३. 'खोट' पाठान्तरम्। अस्मदूदौर्गधातुपाठकोशे 'खेट भक्षणे खोट क्षेपे' इत्येव पठ्यते।

**२६७. पल्यूल लवनपवनयोः ।** लवनपतनयोरिति दुर्गः[1] । पल्यूलयति क्षेत्रम्, कूलं पल्यूलयति वायुः । वल्यूलेति दौर्गाः[2] ॥३२५॥

**२६८. वा गतिसुखसेवनयोः[3] ।** वापयति[4], आदन्तत्वात् दीर्घे अय् लुक् ल्यपि (द्र० ६।४।५६)—निर्वाप्य । अदादौ (२।४३) वा गतिगन्धनयोः—वाति । वातेत्येके—वातयति, अववातत् ॥३२६॥

**२६९. गवेष मार्गणे ।** गवेषयति, गवेषणा ॥३२७॥

**२७०. वास उपसेवायाम् ।** वासयति, अववासत् । वासकः, वासना । भ्वादौ (७३३) वसति, अवीवसत्, अदादौ (२।१६) वस्ते इह वस स्नेहादौ (१०।१८२)—वासयति ॥३२८॥

**२७१. निवास आच्छादने ।** निवासयति, निवासयित्वा[5], अनिनिवासत्[5]; न्यववासदित्येव युक्तम्[5], उपसर्गस्य बाह्यत्वात् ॥३२९॥

---

१. अस्मद्दुर्गधातुपाठकोशे 'लवनपवनयोः' इत्येव पाठः, तथैव तदुपजीव्ये काशकृत्स्नधातुपाठेऽपि ।

२. अस्मद्दुर्गधातुपाठकोशे 'पल्यूल' इत्येव पाठः । काशकृत्स्ने तु 'पल' इत्येव धातुः पठ्यते ।

३. गतौ सुखसेवने चेत्यर्थः ।

४. स्मृतं पुरुषकारे (पृष्ठ २२) ।

५. इह संग्रामयतेरिव निवासयित्वा अनिनिवासत् इत्येव युक्तः पाठः न तु 'न्यववासत्' इति । यत्तु स्वामिना 'उपसर्गस्य बाह्यत्वात्' इति हेतुरुक्तः, सोऽपि चिन्त्यः, संग्राम इव निवाससमुदायस्य धातुसंज्ञत्वात् । सन्ति चान्येऽपि 'व्यय वीर' आदयो धातवो येषूपसर्गा धात्वैकदेशा एव । येषां चैकदेश उपसर्गस्तेभ्यड् उपसर्गात् प्रागेव भवति, न परः । तस्मात् 'अवश्यं संग्रामयतेः सोपसर्गादुत्पत्तिर्वक्तव्या' इति भाष्यवचनमुपलक्षणमेव । वस्तुतस्तु सर्व एव द्विविधा धातवः सोपसर्गाः, निरुपसर्गाश्च । तदुक्तं परिभाषाकृता—पूर्वं हि धातुरुपसर्गेण युज्यते पश्चात् साधनेन इति । अस्मिन् दर्शने उपसर्गत्वेन स्वीकृतांशसंयुक्ता एव पूर्णा धातवः संभू, विभू, पराभू इत्येवमादयः । तेभ्यः उपसर्गयोगे सति पश्चात् यदा साधनेन = कारकेण योगो भवति तदा तेभ्य उत्पद्यमान 'अड्'सोपसर्गरूपात् प्राक्प्रयुज्यते, उपसर्गांशस्यापि धात्ववयवत्वात् । तेन असम्भवत्, अविभवत्, अपराभवत् इत्यादीन्यपि

**२७२. भाज पृथक्कर्मणि ।** विभाजयति, अबभाजत् । भाजितम्, विभाज्य । भ्वादौ भज सेवायाम् (१।७२५)—भजते, भजति, अबीभजत्, भज विश्राणने (१०।१७६)—भाजयति ॥३३०॥

**२७३. सभाज प्रीतिदर्शने ।** सभाजयति, सभाज्यते । सभा-
५ जनम्, सभाजना, सभाजकः, सभाजः ॥३३१॥

**२७४. ऊन परिहाणे ।** ऊनयति, मा भवानूनिनत् । ऊनितम्, ऊनोऽचि (द्र० ३।१।१३४) ॥३३२॥

**२७५. ध्वन शब्दे ।** ध्वनयति । भ्वादौ (१०।३१०)—ध्वनति, ध्वनिः, ध्वानयति ॥३३३॥

१० **२७६. कूट दाहे[1] ।** कूटयति, अचुकूटत् ॥३३४॥

**२७७. केत विश्रावणे ।** निमन्त्रण इत्येके । केतयति, अचिकेतत् । केतितः, संकेत्य, संकेतः । भ्वादौ कित निवासे (१।७२०)—केतति, अचीकितत् ॥३३५॥

**२७८. कुण गुण चामन्त्रणे ।** चकारात्केतोऽपि । आमन्त्रणं
१५ गूढोक्तिः । संकेतयति, कुणयति, गुणयति, अचुकुणत्, अजुगुणत् । तुदादौ (६।३६) कुणति, अचूकुणत्, कूण संकोचने (१०।१३६)—विकूणयते, मुखम् ॥३३६, ३३७)

**२७९. स्तेन चौर्ये ।** स्तेनयति, अतिस्तेनत् । 'स्तेनोऽचि' (द्र०३।१।१३४) ॥३३८॥

२० स्तेनान्ते पर्यङ्के चतुर्विंशे सूत्रशते षट्षष्टं धातुसूत्रशतम् ।

**२८०. आ गर्वादात्मनेपदी ।** गण इति शेषः ।

**२८१. पद गतौ ।** पदयते । दिवादौ (४।६१) पद्यते, हेतावुपपादयति, भ्वादौ पद स्थैर्ये (१।४२ मतान्तरे)—पदति ॥३३९॥

**२८२. गृह ग्रहणे ।** गृहयते, अजगृहत । स्पृहिगृहि (३।२।१५०)
२५ इत्यालुच्—गृहयालुः, गृहितम् ॥३४०॥

---

रूपाणि सम्पत्स्यन्ते । अत एव निवासयित्वा, प्रार्थयित्वा इत्यादौ समासाभावात् ल्यबपि न भवति । यदा तु 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' इति पक्षस्तदा अभवत् इत्येवं रूपे निष्पन्ने समादयः संयुज्यन्ते, 'समभवद्' इत्यादिरूपाणि च भवन्ति ।

१. 'परिदाहे इत्यन्ये' इति धातुवृत्तिकारः (पृष्ठ ३९६)

२८३. मृग अन्वेषणे। मृगयते। मृगिकम्यो: शविधिः[1]—मृगया, मृगितम्[2] ॥३४१॥

२८४. कुह विस्मापने। कुहयते। कुहेयम्[3], कुहकः, कुहना ॥३४२॥

२८५. शूर वीर विक्रान्तौ। शूरयते, अशुशूरत। दिवादौ ५ शूरी हिंसायाम् (४।४६)—शूर्यते, हेतौ शूरयति, अशूशुरत्। वीरयते—वीरः ॥३४३॥

२८६. स्थूल परिबृंहणे। परिबृंहणं पीनत्वम्। स्थूलयते, अतुस्थूलत। स्थूलोऽचि (द्र० ३।१।१३४) ॥३४४॥

२८७. अर्थ उपयाच्ञायाम्। अर्थयते, आर्तिथत, अर्तिथयिषते[4] १० ॥३४५॥

२८८. सत्त्र[5] सन्तानक्रियायाम्। सत्त्रयते, असससत्त्रत, सिसत्त्रयिषते[4] ॥३४६॥

२८९. गर्व माने। गर्वयते। भ्वादौ गर्व दर्पे (१।३८४)—गर्वति ॥३४७॥ १५

आगर्वीयपर्यन्तके दश धातवः।

२९०. सूत्र विमोचने। विमोचनं मोचनाभावः, ग्रन्थनम्। सूत्रयति। असुसूत्रत् ॥३४८॥

२९१. मूत्र प्रस्रवणे[6]। मूत्रयति। अमुमूत्रत्[7] ॥३४९॥

२९२. रूक्ष पारुष्ये। रूक्षयति, अरुरूक्षत्। विरूक्ष्य, २० रूक्षः ॥३५०॥

---

१. अत्र पूर्वं ६१ पृष्ठस्था प्रथमा टिप्पणी द्रष्टव्या।

२. इतोऽग्रे 'मृगः' इत्यधिकम्।

३. कुहा+इयम् इति च्छेदः। द्र० वर्णनेयम् धा० १०।३२३ सूत्रे।

४. नादन्तात् सन् इति काशकृत्स्नसूत्रेण (पृष्ठ २८२) अदन्तेभ्यो धातुभ्यः २५ सन् न भवति।

५. सर्वकोशेषु 'सत्र' एकतकारवान् पाठः।

६. इतोऽग्रे 'मूत्रणे' इत्यधिकम्।

७. इतोऽग्रे 'मूत्रमचि' इत्यधिकम्।

**२९३. पार तीर कर्मसमाप्तौ ।** पारयति, अपपारत् । अनुपसर्गाल्लिम्पविन्द (३।१।१३८) इति शः—पारयः । पारितम्, पारणा । तीरयति, अतितीरत्, तीरम् ॥३५१, ३५२॥

**२९४. श्लेष्क दर्शने ।** श्लेष्कयति ॥३५३॥

५ **२९५. कर्त्र शैथिल्ये ।** कर्त्रयति[1], कर्त्रितम् । कर्तुरगाढत्वेऽपि श्लेष्को वर्तना[2] इत्येके । चन्द्र ऋदितन्धातुं मन्यते—कर्तयति । अदन्तमध्येऽनार्षोऽयमित्येके । दुर्गः—कर्त्रेत्याह—कर्त्रयति ॥३५४॥

**२९६. प्रातिपदिकाद्धात्वर्थे, बहुलमिष्ठवच्च ।** यतस्ततः प्रातिपदिकान्नाम्नो यथादर्शनं[3] धात्वर्थे, क्रियाविशेषणे, णिज् भवति ।
१० कूलमुल्लङ्घयति—उत्कूलयति । कूलप्रतीपङ्गच्छति—प्रतिकूलयति । कूलमनुगच्छति—अनुकूलयति । लोष्टानवमर्दयति—अवलोष्टयति । तृणान्युत्पूल्य शातयति—उत्तृणयति । पुत्रं सूते-पुत्रयति । वृक्षं रोहति-वृक्षयति ।

तत्रैव निदर्शनार्थमाह—

१५ **२९७. तत्करोति । २९८. तदाचष्टे । २९९. तेनातिक्रामति । ३००. धातुरूपञ्च ।**

तदिति द्वितीयासमर्थात् प्रातिपदिकात् करोत्यर्थे आचष्टेऽर्थे च णिज् भवति, तथा तेनेति तृतीयासामर्थ्याद् अतिक्रामत्यर्थे णिज् भवति ।

२० तीक्ष्णं करोति—तीक्ष्णयति, सूत्रयति । वाक्यमाचष्टे—वाक्ययति, वेदयति । हस्तिनाति[4]क्रामति—हस्तयति, अश्वयति । स च णिज्

---

१. 'कर्त्र' इत्यस्यानृदित्वे 'कर्तारयति, कर्तारितम्' इत्यादीनि रूपाणि स्युः। ऋदित्वे तु कर्तयति, यथाह चान्द्रमते । 'कर्त्रयति' इत्यत्र वृद्ध्यभावः कथमिति न ज्ञायते ।

२५ २. अर्थात् 'श्लेष्को दर्शने कर्तृशैथिल्ये' इत्येकं सूत्रम् । तथा सति अर्थद्वयसमुच्चयाय चकारेण भाव्यम् ।

३. 'यथादर्शनात्' पाठा० ।

४. 'हस्तेनातिक्रामति' पाठा० ।

इष्ठवद् बहुलं भवति। कानि पुनरिष्ठवत्त्वे प्रयोजनानि? पुंवद्भावो रभावः टिलोपो यणादिलोपपूर्वगुणौ प्राद्यादेशा विन्मतोर्लुक् च (द्र० महा० ६।४।१५५) हरिणीमाचष्टे—हरितयति, पृथुमाचष्टे—प्रथयति, पटुमाचष्टे—पटयति, दूरं नयति—दवयति, युवानमीक्षते—यवयति, क्षिप्रं भुङ्क्ते—क्षेपयति, क्षुद्रं भाषते[1]—क्षोदयति, युवानमल्पमाचष्टे—कनयति, स्रग्विणमाचष्टे—स्रजयति, धनवन्तमाचष्टे—धनयति, बहुलमिति प्रियमाचष्टे—प्रापयति। प्रकृत्यैकाच् (६।४।१४६) इति टिलोपो नास्ति, बहुलमिति एकाच् प्रकृतिवत्त्वाद् वा—सुखापयति, दुःखापयति, नेष्ठवत्त्वम्, न च भवति—प्रयति, सुखयति, दुःखयति। एवं प्रथयतीत्यादौ उपधावृद्धि[2]रपि नास्ति। धातुरूपश्च प्रातिपदिकस्य भवतीत्यनेन कात्यायनोक्तिं स्मरयति—आख्यानात्कृतस्तदाचष्ट इति कृल्लुक्, प्रकृतिप्रत्यापत्तिः, प्रकृतिवच्च कारकम् (३।१।२६ वा०) इति। कंसवधमाचष्टे—कंसं घातयति, न तु कंसं वधयतीति, बलिं बन्धयति। आख्यानादिति न वाच्यम्—इहापि दर्शनात्—राजागमनमाचष्टे—राजानमागमयति। आचष्ट इत्यपि न वाच्यम्, चित्रपुस्तेष्वपि दर्शनात्। आलोपश्च कालात्यन्तसंयोगे मर्यादायाम्(तु०३।१।२६वा०)—आरात्रि विवासमाचष्टे—रात्रिं विवासयति। चित्रीकरणे प्रापि (३।१।२६ वा०)—उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं प्राप्नोति—सूर्यमुद्गमयति। नक्षत्रयोगे ज्ञि (३।१।२६ वा०)—पुष्येण योगं जानाति,पुष्येण योजयति चन्द्रम्। प्रातिपदिकपरिगणनं छिद्रकर्णान्धदण्डादिभिः (१०।३१०, ३११, ३१२) इति न वाच्यम्, निदर्शनार्थत्वात् यद् वक्ष्यति—बहुलमेतन्निदर्शनम् (१०।३२५)।

३०१. **कर्तृकरणार्थे**। कर्तुः सम्बधिन्यर्थे करणवाचिनो यथादर्शनं णिज् भवति,कर्तृकरणयोरर्थे वा। आलानेन बध्नाति—आलानयति हस्तिनम्। दात्रेण लुनाति—दात्रयति व्रीहीन्, छन्दसोपसान्त्वयति—उपच्छन्दयति। वारिणा सिञ्चति—वारयति। प्रियैः सलीलं करवारिवारिताः,[3] हस्तेनापनयति[4]—अपहस्तयति। तिलकेन मण्डयति—

१. 'भीषयते' पाठा०।
२. 'रपरा वृद्धिः' पाठा०।
३. 'वारितः' कोशपाठः। अनुपलब्धमूलमिदम्।
४. 'हस्तेनाक्षिपति' पाठा०।

तिलकयति, इयं सूक्तिरचना[१]।

३०२. चित्र चैत्रस्य करणे। चित्रयति, वैचित्र्यं संपादयतीत्यर्थः। विचित्रितम्, विचित्रणा चित्रस्यालेख्यस्य करण इति दौर्गाः ॥३५५॥

३०३. कदाचिद्दर्शने। स एव चित्रशब्दः कदाचिद्दर्शने ५ आकस्मिकोत्पत्तौ चुरादिः। चित्रयति, अद्भुतम्पश्यतीत्यर्थः। यथा चित्रङ आश्चर्ये, क्यच्, नमोवरिवश्चित्रङः (३।१।१९) इति—चित्रीयते। चन्द्रः कदाचिदिति धातुं मत्त्वाऽनदन्तत्त्वान्नापाठीत्।

३०४. अंश समाघाते। समाघातो विभाजनम्। अंशयति चन्द्रो दन्त्यान्तमाह—अंसयति, मयूरव्यंसकः ॥३५६॥

१० ३०५. वटि विभाजने। वण्टयति, भ्वादौ (१।१७४ नन्दिमते) वण्टति ॥३५७॥

३०६. लजि प्रकाशने। लञ्जयति। भासार्थोऽपि दृष्टः (१०।१९७) भ्वादौ लज लजि भर्त्सने (१।२५१) लञ्जयति हेतौ ॥३५८॥

३०७. मिश्र सम्पर्चने। सम्पर्चनं श्लेषः। मिश्रयति मिश्रो-१५ ऽचि (द्र० ३।१।१३४) ॥३५९॥

३०८. संग्राम युद्धे। संग्रामयति, संग्रामयित्वा, सिसंग्रामयिषति, असंग्रामयत्। संग्रामोऽचि (द्र० ३।१।१३४)। पूर्वेण (१०।२९७) सिद्धे ग्रामयतेरेव सोपसर्गान् नियमार्थं सूत्रम् ॥३६०॥

३०९. स्तोम श्लाघायाम्। स्तोमयति, स्तोमः, अतुस्तो-२० मत् ॥३६१॥

३१०. छिद्र कर्ण भेदे। द्वौ धातू। छिद्रयति, कर्णयति, आकर्णयति, करणभेद इति गुप्तः ॥३६२॥

३११. अन्ध दृष्ट्युपसंहारे। अन्धयति, अन्दिधयिषति ॥३६३॥

३१२. दण्ड दण्डनिपातने। दण्डयति ॥३६४॥

२५ ३१३. अकि लक्षणे। अङ्कयति गाम्। भ्वादौ (१।६९) अङ्कते। केचिद् एकादिपदे ॥३६५॥

---

१. अस्य को भाव इति न स्पष्टम्।

३१४. अङ्ग पदलक्षणयोः । अङ्गयति, अङ्गितः । अङ्घेत्येके—अञ्जिघयिषति, पूर्वस्याञ्जिगयिषति । अङ्केत्यन्ये—अञ्चिकयिषति ॥३६६॥

३१५. सुख दुःख तत्क्रियायाम् । सुखनं दुःखनं च तत्क्रिया । सुखयति, सुसुखयिषति । दुःखयति ॥३६७, ३६८॥

३१६. रस आस्वादन-स्नेहनयोः । रसयति, रसना, रसः । ५ भ्वादौ रस शब्दे (१।४६६)—रसति, हेतौ रासयति ॥३६९॥

३१७. व्यय गतौ । व्यययति । अवव्ययत् । भ्वादौ (१।६२०) व्ययति, व्ययते, अव्ययीत्, हेतौ व्याययति, व्ययोऽचि ( द्र० ३ । १।१३४ ) ॥३७०॥

३१८. वित्त समुत्सर्गे । समुत्सर्गस्त्यागः । वित्तयति, विच्चितम्, विच्चित्त्वा । व्यय वित्तसमुत्सर्गे इति सभ्याः ॥३७१॥ १०

३१९. रूप रूपक्रियायाम् । रूपक्रिया राजमुद्रादिरूपस्य करणम्[1] । रूपयति, रूपकम् । रूपदर्शनं वा[1]—निरूपयति, निरूपणा ॥३७२॥

३२०. छेद द्वैधीकरणे । छेदयति, अचिच्छेदत् । छेदितम् । अविच्छेद्यम्, विच्छेद्य । रुधादौ (७।३) छिनत्ति, अचिच्छिदत् ॥३७३॥ १५

३२१. छद अपवारणे । छदयति । छद संवरणे (१०।३६)—छादयति, उणादौ छत्वर[2] (द्र० उ० ३।१), छत्रम् (द्र० उ० ४।१५६), छद्म (द्र० उ० ४।१४५) छादिस् (द्र० उ० २।१०८) ॥३७४॥

३२२. लाभ प्रेरणे । लाभयति । अललाभत् । लभेति सभ्याः[2] लभितम्, विलभना । भ्वादौ (१।७०१)—लभते—अलीलभत्[3] ॥३७५॥ २०

३२३. व्रण गात्रविचूर्णने । व्रणयति, अवव्रणत् । भ्वादौ (१।३०२)—व्रणति, हेतौ व्राणयति, अविव्रणत् ॥३७६॥

३२४. वर्ण वर्णक्रियाविस्तारगुणवचनेषु । वर्णक्रिया=

---

१. स्मृतं धातुवृत्तौ (पृष्ठ ४०१) ।

२. स्मृतं पुरुषकारे (पृष्ठ ६९) । २५

३. 'अललभत्' इत्यपपाठः सर्वकोशेषु ।

वर्णनं वर्णकरणं वा। कथां वर्णयति, सुवर्णं वर्णयति,। विस्तारे—वर्णनेयम्। गुणवचनं स्तुतिः शुक्लाद्युक्तिर्वा—राजानमुपवर्णयति, वर्णकः ॥३७७॥

अदन्तपर्यंट्टकः।

५ ३२८. बहुलमेतन्निदर्शनम्[1]। यदेतद् भवत्यादिधातुपरिगणनं तद् बाहुल्येन निदर्शनत्वेन ज्ञेयम्। तेनापठिता मिलि-क्ष्मविप्रभृतयो लौकिकाः (द्र० वामनीयः काव्यालंकारः ५।२।२) स्तम्भुस्तुम्भादयश्च (३।१।८२) सौत्राश्चुलुम्पादयश्च (३।१।३५ वा०) वाक्यकारीया धातव उदाहार्याः। वर्धते हि धातुगणः। तथा च श्रीभोजः—

१० मिलन्त्याशासु जीमूताः, विक्ष्मवन्ते दिवि ग्रहाः।
तपः क्षपयति प्रावृट्, क्षीयन्ते कामिविग्रहाः ॥१॥
अतस्तुनीहि मासर्तून् वसन्तो मानघ स्मरः।
दूतिद्रूतिम्रतीयस्व जिजावयिषति स्मरः ॥२॥
मुषलक्षपहुंकारस्तोमैः कलमखण्डिनि।
१५ कुचविष्कम्भमुत्तम्भन् निष्कुम्नातीव ते स्मरः ॥३॥
नयन्नान्दोलयन्नेष प्रेङ्खोलयति मे मनः।
पवनो वीजयन्नाशा ममाशामुञ्चुलुम्पति ॥४॥
तावत्खरः प्रखरमुल्ललयाञ्चकार (शिशुपालवध ५।७)।

भूवादिनवगणोक्ताः स्वार्थे णिजन्ता अपि भवन्ति, चुरादिपाठस्तु निदर्शनार्थं २० इत्येके। रामो राज्यमकारयत्—(रामा० युद्ध १२८।१०५) वाहयति,वाचयति, भेदयति कृत्यम्, रञ्जयति वस्त्रम्, तापयति, घातयति। आह च—

निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते[2]।
हेत्वर्थानुप्रवेशोऽपि, बुद्ध्यारोपाणिणचं विना ॥

जजान गर्भं महिमानमिन्द्रः (अथर्व० (३।१०।१२) अजीजनदित्यर्थः। २५ षड्भिर्हलैः कृषति (द्र० ३।१।२६ भाष्ये)।[3]

---

१. इदं सूत्रमनार्षमिति नागेशः (द्र० शब्देन्दुशेखरः)।

२. 'णिजुच्यते' वाक्यपदीये (३।७।६०) पाठः।

३. अत्र ७।४।६५ सूत्रस्थं भाष्यं तदीयं प्रदीपं चानुसन्धेयम्।

वान्ति पर्णशुषो वाताः वान्ति[1] पर्णमुचोऽपरे ।
वान्ति पर्णरुहोऽप्यन्ये,[2] ततो देवः प्रवर्षति ।[3]

अन्ये तु प्रातिपदिकाद् धात्वर्थे (१०।२९६) इत्येव सिद्धे सूत्र-मूत्र-छिद्रान्धदण्डादय (१०।३१०, ३११, ३१२) उदाहरणार्थं निदर्शिता इति व्याख्यन्,[4] तेन पर्ण हरितीभावे, अघ पापे, स्कन्ध समाहारे, पक्ष परिग्रहे, तसि अलंकारे, ऊष क्षुरणे, क्षप प्रेरणे—[5]क्षपयति, क्षपा, स्फुट प्रकटभावे—स्फुटयति, तथा तडित् खचयतीवाशः । पांशुर्दिशां मुखमतुत्थयदुत्थितोऽद्रेः (शिशुपालवध ५।११) ।

चुरादिणिचो बहुलं निदर्शनं वेत्यपरे । तेन पक्षे चोरति, चिन्ततीत्यादि सिद्धम् ।

धातूनामर्थनिर्देशोऽयं निदर्शनार्थमिति सौनागाः । यदाहुः—
क्रियावाचित्वमाख्यातुमेकैकोऽर्थो निदर्शितः ।
प्रयोगतोऽनुमातव्याः अनेकार्था हि धातवः[6] ॥

३२६. णिङ् अङ्गनिरसने । प्रातिपदिकार्थाद् अङ्गविक्षेपेऽर्थे णिङ् भवति । ङकारस्तङर्थः (द्र० १।३।१२) । हस्तं निरस्यते—हस्तयते, पादयते ।

३२७. श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च । श्वेताश्वादीनाञ्चतुर्णां यथासंख्यं णिङ्सङ्गेऽश्वस्य तरस्येतस्य कस्य च लोपो भवति । श्वेताश्वमाचष्टे—तेनातिक्रामति वा—श्वेतयते । अश्वतरम्—अश्वयते । गालोडितम्—गालोडयते । कालोडित इति गुप्तः, गालोडितस्य प्रकृतिप्रत्ययविभागालाभात् । आह्वरकम्—आह्वरयते । पारायणिका अर्थानुवृत्तिवद् अत्रापि

१. 'वातास्ततः' पाठान्तरं दशपाद्युणादिवृत्तौ ८।४०॥
२. 'ततः पर्णरुहो वान्ति' पाठा० दश० उणादिवृत्तौ ८।४०॥
३ श्लोकोऽयमुज्ज्वलदत्तेनाप्युणादिवृत्तावुद्धृतः (पृष्ठ ६९) ।
४. यथा पुरुषकारवचनं (पृष्ठ ९५) तथाऽयं व्याख्याता भीमसेनः प्रतीयते । तेन काचिद्धातुवृत्तिरपि विहितेति प्रतीयते ।
५. अत्र पुरुषकारः (पृष्ठ ९५) देवराजयज्वकृता निघण्टु टीका (पृष्ठ ४३, १०९) च द्रष्टव्या । ६. अत्र पूर्व २ पृष्ठस्य टि० ५, ६ द्रष्टव्या ।

